Mangalvedkar Series–18.

श्रीसत्यसन्धयतिराजकृतम्

# ॥ श्रीविष्णुसहस्रनामभाष्यम् ॥

Shri–Satya–Sandha–Yatiraja–Kritam

# Shri-Vishnu-Sahasranama-Bhashyam.



*Edited by*

SHRI K. G. KALKOTI, M. A., B. T.,

DHARWAR – 1.

*Published by*

R. NAGARAJA RAO,

C/o Agasthiar Book Depot,

Teppakulam Post,

TIRUCHIRAPALLI – 2.

Free for Donors only]  1972  [ Postage Extra

॥ श्रीः ॥

"ततः क्रमेण प्रचरन्नुपेयिवान्
अवन्दतेन्दीवरसुन्दरच्छविम् ।
अम्भोजनाभं सभुजङ्गशायिनं
श्रीवल्लभं श्रीमदनन्तसत्पुरे ॥"

— सुमध्वविजये सर्ग ५, श्लो. ३६.

|| श्रीः ||

श्रीरङ्गनाथ तव पादनिषेवणे श्रीः
　　काले नखेषु सुमुखी प्रतिबिम्बिताभूत् ।
चित्रं न किन्तु तव देव तथाविधत्वं
　　तस्यास्सुभूषणमणौ जगतो हि बिम्बः ॥
　　श्रीश्रीनिवासकृते श्रीरङ्गनाथनवमालिकास्तवे आदिमश्लोकः

"शृङ्गारसिन्धुं स भुजङ्गशायिनं
　　श्रीरङ्गवासं कृतमङ्गलं सताम् ।
अमन्दधीर्देवमवन्दतागतः
　　कवेरकन्याहिमवायुसेवितम् ॥"
　　— सुमध्वविजये श्लो. ५-४७.



॥ श्रीरङ्गप्रभुः ॥

*By Courtesy*—Devarnama Bhajana Sangha, Srirangam.

॥ SHRI ॥





Photos of (i) SHRI RAJAGOPALASWAMI
& (ii) SHRI HEMABJANAYAKI
(alias SENGAMALATTAYAR)

Presiding Deities of (Raja) Mannargudi
(Thanjavur District).

**Mannargudi, which is the native place of**
Shri V. KUPPANNARAO (Mangalvedkar),
**is also familiarly known as Dakshina-Dwaraka cum Champakaranya - Kshetra.**

॥ श्रीः ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्याः ।

श्रीशपादाम्बुजासक्तः करुणापूरशीतलः ।
मध्वाख्यो मरुदंशो मे संतापान् हन्तु सन्ततम् ॥

*By Courtesy*—Devarnama Bhajana Sangha, Srirangam.



॥ ओं ॥

## ॥ श्रीगुरुराजप्रार्थना ॥

श्रीमन्मध्वकृतांतसंगतकृतीर्यन्निर्मितात्यद्भुताः
सर्वेऽधीत्य सतीर्हि तत्प्रवचनाऽसक्तया रमन्तेऽनिशम् ।
सोऽसौ श्रीजयतीर्थपूज्यचरणः स्वग्रंथसक्तिं पराम्
अस्मिन्जन्मनि यावदायुरखिलान् विघ्नान्निवार्यादिशेत् ॥
— बृहज्जयतीर्थविजये – सर्गः ५ श्लो. ६४.

[ कन्नडार्थ–श्रीजयतीर्थश्रीचरणरु श्रीमध्वाचार्यरचित ग्रन्थगळ व्याख्यानरूपगळाद टीकागळन्नु रचिसिदरु. समीचीनगळाद ई टीकाग्रन्थगळन्नु अनेकरु अध्ययनमाडि प्रवचनमाडुत्ता सर्वकालदल्लि आनन्दिसुत्तिरुवरु. इन्तह श्रीटीकाचार्यरु ई जन्मदल्लि आयुष्य इरुववरिगू समस्त विघ्नगळन्नु परिहरिसि तन्न टीकाग्रन्थगळल्लि आदरवन्नु उत्तमरीतियल्लि अनुग्रहिसलि. ]

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीः ॥



गीतां अत्यर्थधूतश्रितजनदुरितां इन्दुवंशप्रसूतौ
व्याचक्षाणे मुरद्विषि अभिजनमभजद्भद्रमिन्दोरनिद्रम् ।
धीर श्रीराघवेन्द्र त्वयि पुनरनघे हंसवंशोदिते तां
व्याकुर्वंत्यद्य भव्यं कथमिव न भजेदाशु मित्रान्ववायः ॥

गुरुगुणस्तवने श्लो–२५

*By Courtesy*—Sri T. V. Kesava Rao, Thanjavur.

॥ श्रीः ॥

"आसेतोरातुषाराद्रेः यो दिशो जितवान् मुहुः ।
सत्यध्यानगुरुः पातु यतीन्द्रैरपि पूजितः ॥"

अभिनव आनन्दतीर्थ, प्रातःस्मरणीय,
श्री १००८ श्री सत्यध्यानतीर्थर
जन्म शतमानोत्सव संवत्सर ईवाग
नडियुत्तदे.

॥ श्रीदिग्विजयरामो विजयते ॥



"पक्षीशासनपादपूजनरतः कक्षीकृतोद्यद्दयो

लक्षीकृत्य सभातले रटद्दसरक्षीश्वरानाक्षिपत् ।

अक्षीणप्रतिभाम्बरो विधिसरोजाक्षीविहाराकरो

लक्ष्मीं नः कलयेज्जयी सुचिरमभ्यक्षीकृताक्षोभणाम् ॥"

— (श्लोक १३ पृ० १८)

॥ श्रीः ॥

॥ श्रीगुरुभ्यो नमः ॥

**सुधायां अद्वितीयोऽसौ विद्यादाने महापटुः ।**
**सत्यप्रमोदगुरुराट् राजते राजमानितः ॥**

# FOREWORD

1. Our *Pujya* Sri K. G. Kalkoti, wrote to us in his letter dated 31—1—1972 that His Holiness Shri 1008 Shri Satya-Pramoda-Tirtha Shripadangalavargalu had decided to celebrate the शताब्दि, रजतमहोत्सव and अभिवृद्धिकारिणीसभा at Chirtanur (Tirupati), on चैत्रशुद्ध ८ & ९ i. e., on the 22nd & 23rd of March, 1972 respectively. Immediately an idea struck into our mind that we should fulfil our long-felt desire of printing

"श्रीसत्यसन्धयतिराजकृतं श्रीविष्णुसहस्रनामभाष्यम्".

Hence, we wrote to our Vidya-Guru श्री. म. वें. Guttal Hayagreevacharya, Poona, about this decision. He expressed his consent to our proposal and also sent his अभिनन्दनम् in his Post Card dated 15—2—72, also wishing Grand Success to our noble endeavour. We are glad to inform the interested Public that his wish has come true in accordance with the saying

"गुरुप्रसादो बलवान् ; न तस्मात् बलवत्तरः"

2. Our humble pranams are specially due to His Holiness Shri 1008 Shri Vidya-Payonidhi Tirtha Shri-padangalavargalu, Head of Shri Vyasaraja Mutt (Sosale) (Camp) Salem-1, for having become the Patron of the Publication committee of "Mangalvedkar Series" of Books and His blessings.

3. We are also deeply indebted to

(i) Shri D. V. Subbachar, B. A., F. C. A., Chartered Accountant, Coimbatore – 1.

(ii) Dharma-Bhushana Shri M. V. Krishnamurthy Rao, B. A., B L., "Royapalaya Nilayam", Srirangam.

(iii) Shri T. G. Srinivasan, B. A, B. L., Advocate, Satyamangalam.

(iv) Dr A. Raghava Rao, President, Devaranama Bhajana Sangha, Srirangam.

& (v) Pandit Shri M. Rama Rao, B. A., L. T., Kumbakonam.

for their able co-operation and encouragement given to this poor soul in bringing out this useful book.

4. Our grateful thanks are also due to Sri Vani Vilas Press for bringing out this monumental publication within a record time of about only one month.

5. In fine, we pray that our Guru-Sarvabhowmaravara-Hritkamalanivasiyada Seetapati-Shri-Ramachandraabhinna Shri Lakshmi-Venkataramana-Devaru be pleased by this Kainkarya and shower all His choicest blessings on the readers of Shri-Vishnu-Sahasranama-Bhashyam (किमलभ्यं प्रसन्ने श्रीनिकेतने)

सज्जनविधेयः,

43, A. M. Road,
Srirangam,
17th March, 1972.

V. KUPPANNA RAO,
(*alias* K. V. Mangalvedkar)
Joint Editor,
"Mangalvedkar Series" of Books.

# प्रस्तावना

कलिमलकलुषेऽस्मिञ्जने ज्ञानमार्गमाविष्कर्तुं विष्णोरन्यैरधार्यामाज्ञां शिरसि कृत्वाऽवतीर्णः मन्त्रसिद्धः त्रैलोक्याचार्यवर्यः आनन्दतीर्थमुनिः नानाविधव्यसनराशिभरावभुग्नशिरसां कलिमलावकुण्ठितमनसां निःश्रेयससाधनसंविद्विधुराणां संसारार्णवतारणाय परमकरुणया श्रीमद्भगवद्गीतातात्पर्ये,

"शास्त्रेषु भारतं सारं तत्र नामसहस्रकम् ।
वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा ॥"

इति प्रमाणमुद्धरन् विष्णुसहस्रनामकृष्णगीताज्ञानेन संसार्ययमञ्जसा मुच्यते इत्युपदिदेश ।

श्रीमत्सुमध्वविजये षष्ठसर्गे चतुर्थश्लोके, श्रीमदाचार्यैः विद्वत्सभायां श्रुतेस्त्र्यर्थतां भारतस्य दशार्थतां वैष्णवपदसहस्रतयस्य शतार्थतां उक्तां श्रुत्वा, सहासमुखैस्तैः विद्वद्भिः हरिनाम्नामर्थशतकं वर्ण्यतामिति उक्ते श्रीमदाचार्यः,

वर्णयामि तदहं सकलं वः सौष्ठवादनुवदन्तु भवन्तः ।
तं वदन्तमिति तेऽथ वदन्तो बाढमित्यतिदृढोद्यममापुः ॥ ६ ॥

प्रत्ययप्रकृतिसङ्गमभङ्गीं शब्दशास्त्रविहितां प्रतिदर्श्य ।
शुद्धधीः श्रुतिशिरःशतसिद्धान् अभ्यधात्सपदि 'विश्व'पदार्थान् ॥

यावदर्थशतकं नविशङ्कः संततोक्तिकृदपूरयदेषः ।
वर्णितावधृतिदुर्बलचित्तास्तावदाकुलहृदो ह्यभवंस्ते ॥ ८ ॥

इत्यादिश्लोकैः आनन्दतीर्थमुनिना कृतं विष्णुसहस्रनाम्नां व्याख्यान-वैभवं वर्णितं सुप्रथितम् । अनेन विष्णुसहस्रनाममहिमार्थगाम्भीर्यं च स्फुटं प्रतीयते ।

श्रीमदाचार्याणां महावेदान्तसिंहासने विराजिताः श्रीमदुत्तरादि-मठाधीशाः मुनीन्द्रवृन्दवन्दितपदद्वन्द्वाः ज्ञानविज्ञानवैराग्ययशोवैभवेन धवलितसर्वदिगन्ताः तपःप्रभावेण पावितमानवलोकाः नित्यं निरन्तरं निखिलनिगमगेय श्रीनारायणानुसंधानदीक्षाः श्रीमत्सत्यबोधतीर्थकर-कमलसञ्जाताः श्री १००८ श्रीमत्सत्यसंधतीर्थ श्रीपादाः मोक्षदान-समर्थज्ञानगर्भितस्य श्रीविष्णुसहस्रनामस्तोत्रस्य भाष्यं, श्रीमहागुरूणां श्रीमदानन्दतीर्थभगवत्पादाचार्याणां प्रेरणया प्रीत्यर्थं च कुर्वाणाः सहस्र-नामज्ञानविधुराणामकिञ्चनानां महदुपकारं निर्व्याजमकुर्वन् । श्रीमध्व-विजयोक्तश्रीमदाचार्याणां विष्णुसहस्रनामव्याख्यानानुसारेण यथाशक्ति श्रुतिस्मृतिप्रमाणोदाहरणं शब्दशास्त्रविहिता प्रत्ययप्रकृतिसङ्गमभङ्गी च सुविपुलं दृश्यते श्रीमत्सत्यसन्धतीर्थकृते विष्णुसहस्रनामभाष्ये । पद-

विवरणे विग्रहकौशलं, धातूनामनेकार्थप्रदर्शनं तत्र प्रमाणोदाहरणं ग्रन्थकर्तुः मुनीन्द्रस्य महत्कौशलम् । प्रमाणोदाहरणसमये श्रीमदाचार्यकृतबृहद्भाष्य सूत्रभाष्यादिवचनोदाहरणात् इदं भाष्यं श्रीमदाचार्याणामतीव सम्मतमिति ज्ञायते । समापितभाष्यः श्रीसत्यसन्धतीर्थः स्वभाष्यं सेवारूपेण स्वगुर्वन्तर्यामिणे श्रीरामचन्द्रायार्पयन्प्रार्थयते —

श्रीमद्विष्णुसहस्रनामविवृतिः श्रीसत्यबोधाभिध
स्वामिस्वान्तनिशान्तवर्त्यवनिजाकान्तस्य सन्तुष्टये ।
भक्त्याऽकारि च सत्यसंधयतिना तुष्टोऽनया सेवया
देयाज्ज्ञानमतो भवामयभयात्पायाद्दयातोयधिः ॥ इति ।

अनेन विवृतिकारस्य गुरुभक्तिः स्फुटं ज्ञायते । श्रीमत्सत्यसंधतीर्थमहिमाऽतीव गम्भीरः सुविस्तृतश्च पूर्वाचार्यैरेकस्मिन्नेव श्लोके सुंदरतमं वर्णितः ।

दृष्टा गङ्गा शातितं द्वारकीलम्
मुष्णामुद्रा पंढरीशस्य दत्ता ।
कृष्णस्पृष्टः शेषदर्शी लतावान्
अष्टैश्वर्यं सत्यसंधं नमामि ॥

एतादृशाष्टैश्वर्यशालिश्रीसत्यसंधगुरुराजकृत विष्णुसहस्रनामभाष्यं श्रीसत्यसंधतीर्थालंकृतपीठमलंकृतानां श्रीमदभिनवानन्दतीर्थेत्यन्वर्थक-

नाम्नां, समस्तयतिकुलमार्गदर्शकत्वात् "हिरियस्वामिगळु" इति आसेतुहिमाचलं सुप्रथितयशसां श्री १००८ श्रीमत्सत्यध्यानतीर्थानां शतमानोत्सवे परमतनिराकरणपूर्वकं स्वमतस्थापने बद्धकटीनां श्रीमन्न्यायसुधामण्डनकाराणां, यमनियमविष्णुपञ्चककाष्ठमौनव्रतसुधादिसच्छास्त्रप्रवचन,वादिनिग्रहकौशलैः श्रीमदभिनवसत्यध्यानतीर्थाः इत्युच्चैः परवादिभिरपि गीयमानयशसां श्री १००८ श्रीमत्सत्यप्रमोदतीर्थचरणानां श्रीमदुत्तरादिमठीय वेदान्त साम्राज्य पट्टाभिषेक रजतमहोत्सवे

'मायावी परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम् ।
स्वामिपुष्करिणीतीरे रमया सह मोदते ॥

इत्यादिमहिमोपेततिरुपतिक्षेत्रे प्रकटयितुमस्माकमतीव प्रमोदः । अनया सेवया गुरुसार्वभौमान्तर्गत सीतापति श्रीरामचन्द्राभिन्नः क्षेत्रपतिः श्रीमद्वेङ्कटभूधरेन्द्ररमणः प्रीयतामिति प्रार्थना ।

श्री श्रीचरणसेवकौ संपादकौ

क. गो. कलकोटि, एम्. ए., बि. टि., धारवार्.

वा. कुप्पणाराव् (alias कु. वा. मङ्गळ्वेड्कर्) श्रीरङ्गम्.

श्रीशके १८९४ परिधावी चैत्र शुद्ध २.

॥ श्रीः ॥



मायावी परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम् ।
स्वामिपुष्करिणीतीरे रमया सह मोदते ॥

V–ii.

॥ श्रीः ॥



ध्यानश्लोकः —

ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रं
जानुप्रसक्तकरयुग्ममथाधराभ्याम् ।
चक्रं दरं च दधतं प्रियया समेतं
तिग्मांशुकोट्यधिक तेजसमग्र्यशक्तिम् ॥

(मन्त्रः)

उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥

।। श्रीः ।।



"उद्यद्भास्वत्समाभासः चिदानन्दैकदेहवान् ।
चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ।।

लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ।
सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् ।।"

—इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित-तन्त्रसारसंग्रहे

श्रीकृष्ण ध्यानम —

ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यं
सौन्दर्यसारमरिशङ्खवराभयानि ।
दोर्भिर्दधानमजितं सरसश्च भैष्मी-
सत्यासमेतमखिलप्रदमिन्दिरेशम् ।।

ओं क्लीं कृष्णाय नमः ॥

"नारायणेति वाग्वल्ली चतुरक्षरपल्लवा ।
धर्मार्थकाममोक्षाणां फलदा नात्र संशयः ।।"

— श्लो. २१, पुट. १२-१३ in 'प्रातःस्मरणम्' Book of निर्णयसागर प्रेस्, मुंबई.

॥ श्री: ॥



॥ श्री १०८ श्री सत्यसंध तीर्थ गुरुराजो विजयते ॥

विष्णोः पदश्रिद्धोत्रातैः स्वान्तध्वान्तनिवारकः ।
श्रीसत्यसन्धसूर्योऽयं भासतां नो हृदम्बरे ॥

# ॥ श्रीविष्णुसहस्रनामस्तोत्रम् ॥

श्रीलक्ष्मीहयग्रीवाय नमः ।

॥ हरिः ॐ ॥

वैशंपायन उवाच —

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरश्शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥
किमेकं दैवतं लोके किंवाप्येकं परायणम् ।
स्तुवन्तः कङ्कमर्चन्तः प्राप्नुयुर्मानवाश्शुभम् ॥
को धर्मस्सर्वधर्माणां भवतः परमो मतः ।
किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥

भीष्म उवाच —

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषस्सततोत्थितः ॥ ४ ॥
तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा ॥ ८ ॥
परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९ ॥
पवित्राणां पवित्रं यो मङ्गळानां च मंगलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥
यतस्सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥
यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥

अस्य श्री विष्णुसहस्रनामस्तोत्रमहामन्त्रस्य, श्री भगवान् वेदव्यास ऋषिः, विष्णुर्देवता, अनुष्टुप्छन्दः, श्रीविष्णुप्रीत्यर्थे जपे विनियोगः ॥ हरिः ओम् ॥

॥ श्रीः ॥

# ॥ श्रीविष्णुसहस्रनामभाष्यम् ॥

## ( श्रीसत्यसन्धयतिराजकृतम् )

—*—

॥ हरिः ॐ ॥

**विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।**
**भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १ ॥**

भाष्यम् ॥ इह हि नानाविधव्यसनराशिभवावग्रशिरसां कलिमलावकुण्ठितमनसां निःश्रेयससाधनसंविद्विधुराणां वेदानधिकारिणां स्त्रीशूद्रादीनां संसारार्णवतारणाय परमकारुणिककमलाकमलासनमुखसुरवरनिकरप्रार्थितेन निर्व्याजकरुणश्रीरमणेन स्वीकृतव्यासरूपेण निर्मितसहस्रनामानि पूर्वतनैर्व्याख्यातान्यपि बुद्धिशुद्धये यथामति व्याख्यास्यन्ते ॥ विश्वमिति ॥ विश्वं जगत्प्रविष्टम् । विश् प्रवेशन इति धातुः । तदेवानुप्राविशदिति श्रुतेः । सर्वत्र प्रविष्टत्वाज्ज्ञानरूपत्वाद्वा विश्वम् । वा गतिगन्धनयोरिति धातुः । विश् च तत् वश्चेति विग्रहः । विः पक्षी गरुडस्तेन श्वयति गच्छतीति वा । विशेषेण श्वयति व्याप्नोतीति वा । विशेषेण वर्धत इति वा । टुओश्वि गतिवृद्ध्योरिति धातुः । वायुमन्तर्यामितया वर्तयतीति विश्वशब्दोपपदात् वृतु वर्तन इत्यतो डः । लोपः समान इति वलोपः । गुहाशयां निहिताः सप्तसप्तेतिवत् ।

विश्वं जगद्वर्तयतीति वा। विश्वस्य कारणत्वाद्वा। कार्यकारणयोरैक्यशब्दव्यवहृतिर्भवेदिति शब्दनिर्णये। जीवनियामकत्वाद्वा, शरीरेषु प्रविष्टत्वाद्विश्वो जीव उदीर्यते। जीवस्य तदधीनत्वाद्विष्णुर्विश्व इति स्मृत इत्युक्तेः। विशिष्टसुखज्ञानरूपत्वाद्वा। विशिष्टसुखबलरूपत्वाद्वा। विश्वं सुबलरूपत्वादित्युक्तेः। अत्र प्रमाणे सुशब्दः सुखवाची। स्वित्यानन्दः समुद्दिष्ट इत्युक्तेः। सर्वव्यापित्वाद्विष्णुः। विष्लृ व्याप्ताविति धातुः। सर्वप्रवेशित्वाद्वा। विश् प्रवेशने। त्रिविक्रमरूपेण पादक्रमणाद्विष्णुः। गत्यर्थाद्वयतेः कर्त्रर्थकष्णुप्रत्ययः॥ वर्तन्त इति वाः वृतु वर्तने। षट् ऐश्वर्यवीर्ययशःश्रीज्ञानवैराग्याणि यस्मिन् स वषट्। षड्गुणत्वेन वर्तत इति वा। वषडित्याक्रियत इति वषट्कारः॥ भूतभव्यभवतां अतीतागामिवर्तमानानां प्रभुः। भूतं प्रभूतं मङ्गलं यस्मात्स भूतभव्यः स चासौ भवत्प्रभुश्चेति॥ भूतानि कृन्ततीति भूतकृत्। कृति छेदने। भूताद्युपद्रवपरिहर्तेत्यर्थः॥ भूतानि प्राणिनः करोतीति वा भूतस्रष्टेत्यर्थः॥ भूतानि बिभर्तीति भूतभृत्॥ भावयति जगदुत्पादयतीति भावः। भाः कान्तीः अवति ददाति चन्द्रादिभ्य इति वा। भानि नक्षत्राण्यवति प्रविशतीति वा। अव रक्षणगतिकान्तिप्रीतितृप्त्यवगतिप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छा दीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिष्विति धातुः॥ भूतात्मा भूतनियामकः। भूतस्वरूप इति व्याख्यानं तु पूर्वोत्तरनामविरुद्धम्। भुवि तः व्याप्तः स चासा-

वात्मा चेति वा ॥ भूतानां भावान्मनांसि नयतीति भूतभावनः । भूतानि भावयतीति वा । भुवि ऊता भा यस्य स भूतभः स चासाववतीत्यवनश्चेति वा ॥ १ ॥

## पूतात्मा परमात्मा च मुक्तानां परमागतिः ।
## अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥

भा०—॥ पूतात्मेति । पूता आत्मानो जीवा यस्मात् । पूतानामात्मा मनो यस्मिन्निति वा । पूतश्चासावात्मा च ॥ १० ॥ परम उत्तमः । परः शत्रुर्मीयते हिंस्यते येनेति वा स चासावात्मेति । परा च सा मा च परमा । यद्वा पातीति पा । पा च सा रमा च परमा तस्या आत्मा पतिः । आदानार्थत्वतश्चायमात्मशब्दः पतिं वदेदित्यनुव्याख्यानोक्तेः । यद्वा स्वीयतया भृत्यानादत्त इत्यात्मा । तदुक्तं भागवते—यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते ॥ इति । यद्वा तनु विस्तारे मा निर्माण इति धातुभ्यामात्तनिर्माणाद्वा, आङ्पूर्वाभ्यां तनु विस्तारे माङ् मान इति धातुभ्यामात्तज्ञानाद्वाऽऽत्मा । तदुक्तं बृहद्भाष्ये — अततत्वात्तथाऽतृत्वादात्माऽसौ ब्रह्मणः स्मृतः । आदानादात्तनिर्माणादात्तज्ञानात्तथैव चेति ॥ सूत्रभाष्ये तु—यो गुणैः सर्वतो हीनः सर्वदोषविवर्जितः । हेयोपादेयरहितः स आत्मेत्यभिधीयते ॥ तत्रै-

चान्यत्र — सर्वान्गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां न चैवेति ॥ मुक्तानां परमागतिः । षष्ठ्या अलुक् । प्रियादिगणपाठमभिप्रेत्य पुंवद्भावाभावः । आगतिरिति वा । उत्तमगम्य इत्यर्थः ॥ अवेः सूर्यस्यायो गमनं यस्मादित्यव्ययः । अविर्मेषस्तद्वच्छत्रून्प्रति गमनं यस्येति वा । पुर् अग्रगमन इत्यतः पुरुषः सृष्टेः प्राग्विद्यमानः । पुरुर्बहुलः षः चेष्टा यस्येति वा । षकारः प्राण आत्मेति श्रुतेः । पुरु बहुदैत्यनाशकत्वाद्वा, षोऽन्तकर्मणीति धातोः । पुरु पूर्णं मोक्षाख्यं फलं स्वात्मानमेव सनोति ददातीति पुरुष इति भागवतटीका ॥ साक्षादीक्षत इति साक्षी । साक्षाद्द्रष्टरि संज्ञायामिति स्मृतेः ॥ क्षीयते स्थीयते भगवताऽत्रेति क्षेत्रमित्युच्यते । क्षि निवासगत्योः । क्षेत्रं जानातीति क्षेत्रज्ञः । क्षेत्रस्य प्रमाणप्रसिद्धाव्यक्तादिशरीरस्य ज्ञस्तथा । न क्षरतीत्यक्षरोऽविनाशी । अक्षेष्वक्ष्यादीन्द्रियेषु रमत इति वा । क्षि क्षय इति धातोः क्षं नाशः । न विद्यते क्षं यस्य तदक्षं वैकुण्ठादि तद्राति ददातीति वा तत्र रमत इति वा ॥ २ ॥

**योगो योगविदां नेता प्रधानपुरुषेश्वरः ।**
**नारसिंहवपुः श्रीमान्केशवः पुरुषोत्तमः ॥**

भा०— ॥ योग इति । युज्यते हृदि योगिभिर्ध्यायत इति योगः । युनक्ति गुणान्स्वस्मिन्निति वा । भक्तानां भवतरणो-

पाय इति वा ॥ योगं समाधिं विदन्तीति (जानन्ति) योगविदो भक्तास्तेषां नेता मोक्षफलं प्रापयितेति योगविदां नेता ॥ प्रधानं प्रकृतिः पुरुषा जीवास्तेषामीश्वरत्वात्प्रधानपुरुषेश्वरः । प्रकृष्टे धाने धारणपोषणे यस्मात्स प्रधानः । पुरुषेति तादर्थ्ये सप्तमी । चतुर्मुखार्थमश्वः सन् ऋगादिविद्यां रातीति पुरुषेश्वरः । सप्तम्या अलुक् । प्रधानश्चासौ पुरुषेश्वरश्चेति वा ॥ २० ॥ नारसिंहवपुः नरसिंहयोरिदं नारसिंहं वपुर्यस्य स तथा ॥ श्रीमान् शंरूपे वायौ रतत्वाच्छ्रीः भारती लक्ष्मीः कान्तिर्वा श्रीः स्वामित्वेन वा भर्तृत्वेन वाऽऽधारत्वेन तद्वान् ॥ कं ब्रह्माणमीशं रुद्रं च वर्तयतीति केशवः । को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गसंभूतौ ततः केशवनामवानिति हरिवंशे रुद्रेण कैलासयात्रायां निरुक्तत्वात् । हिरण्यगर्भः कः प्रोक्त ईशः शङ्कर एव च । सृष्ट्यादिना वर्तयति तौ यतः केशवो भवानिति वचनान्तराच्च । प्रशस्ताः केशा अस्य सन्तीत्यर्थे केशाद्वोऽन्यतरस्यामिति वप्रत्ययः । केशिनं हन्तीति वा । विष्णुपुराणे, यस्मात्त्वयैव दुष्टात्मा हतः केशी जनार्दन । तस्मात्केशवनाम्ना त्वं लोके ज्ञेयो भविष्यसीति कृष्णं प्रति नारदोक्तेः । अथवा सूर्यस्य तपतो लोकानग्नेः सोमस्य वाऽच्युत । अंशवो यत्प्रकाशन्ते मम ते केशसंज्ञिताः । सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमा इति मोक्षधर्मोक्तेः । केशोंऽशुमानिति वा । पुरुषाणामुत्तमः पुरुषोत्तमः । न निर्धारण इति षष्ठीसमासनिषेधो न भवति ।

अथवा पुरुषोत्तम इति सप्तमीति योगविभागात्सुप्सुपीति वा समासः। पुरुषाभ्यामुत्तम इति वा पञ्चमी भवति। अत्र योगविभागात्समासः । अक्षरादपि चोत्तम इति गीतोक्तेः ॥

**सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।**
**सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥**

भा०–॥ सर्व इति। वाच्यतया वेदाख्यरवसहितत्वात्सर्वः। निर्वचनत्वाद्रेफोत्तराकारलोपः। सर्वव्यापित्वाद्वा। सर्वं समाप्नोषि ततोऽसि सर्व इति गीतोक्तेः। अथवा सर्वस्रष्टृत्वादिनिमित्तेन सर्वशब्दवाच्यः। स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता। यतः सर्वस्य तेनाहं सर्वोऽस्मीत्यृषिभिः स्तुत इति गीताभाष्योक्तेः॥ शृणातीति शर्वः। शृ हिंसायाम्। अयोग्यानां शम्रोधनाद्वा शर्वः। शर्वः शंरोधनाद्धरिरिति भाष्योक्तेः॥ शिवं मङ्गलमस्यास्तीति शिवः। अर्शआद्यच्। शिवयतीति वा। तत्करोतीति ण्यन्तात् पचाद्यच्। शं सुखमेषामस्तीति शिवा मुक्तास्तान्वर्तयतीति वा॥ तिष्ठति सर्वत्रेति स्थः स्थश्चासावणुश्चेति स्थाणुः। यद्वा स्थाणुरिति सूत्रात्स्थाधातोः णुप्रत्यये स्थिरत्वात्स्थाणुः। शिवेऽन्तर्यामितया तिष्ठतीति शिवस्थाणुरित्येकं पदं वा॥ भूतानामादिः कारणं भूतादिः। भूतैरादीयत उपादीयत इति वा। भूतानामादिर्भक्षक इति वा। अद् भक्षणे॥ निधीयते हृदि सज्जनैरिति निधिः॥३०॥

असौ सूर्ये अयति गच्छतीत्यव्ययः । ध्येयः सदा सवितृमण्डलमध्यवर्तीत्युक्तेः । प्रीत्यर्थादवतेर्विच् । अत्रा प्रीत्या यान्ज्ञानिनः प्रति यातीति वा ॥ सम्यग्भानि नक्षत्राणि वर्तयतीति सम्भवः ॥ भावमभिप्रायं नयतीति भावनः । भया सूर्यादिगतस्वभासा आवयति ज्ञापयति पदार्थानिति वा । भानां कान्तीनामवनं प्राप्तिर्यस्येति वा । न विद्यते भावनमुत्पादनं यस्येति वा ॥ पोषकत्वाद्भर्ता ॥ प्रकृष्टा भा ययोस्तौ प्रभौ सूर्यचन्द्रौ तौ वर्तयतीति प्रभवः । प्रकृष्टो भवो येनेति वा ॥ प्रकर्षेण भवतीति प्रभुः ॥ ईशनशीलत्वादीश्वरः । ईशेभ्यो वर इति वा ॥ ४ ॥

**स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः ।**
**अनादिनिधनो धाता विधाता धातुरुत्तमः ॥**

भा०—॥ स्वयम्भूरिति । स्वयमेव भवतीति स्वयम्भूः ॥ शं सुखं भावयतीति शम्भुः ॥ आदित्यस्थत्वादादित्यः । आदिश्चासौ त्यश्चेति व्युत्पत्त्या सूर्यान्तर्गतरूपेण पृथिवीरसं गृह्णानो यातीति वा । तदुक्तमृग्भाष्ये । आदित्यस्थत्वात्स आदित्य आददानः प्रयाति वेति । उपेन्द्ररूपेणादितिपुत्रत्वाद्वा ॥ ४० ॥ पुष्करं कमलं तद्वदक्षिणी यस्य सः पुष्कराक्षः । रलयोरभेदात् पुष्कलान्यक्षीणि यस्येति वा । सहस्राक्षः सहस्रपादिति श्रुतेः ॥ पुष् पुष्टावित्यतः पुषं पुष्टिं करोतीति पुष्करः । न विद्यते क्षं

नाशो यस्येत्यक्षः पुष्करश्चासावक्षश्चेति वा। न विद्यते स्वं धनं येषां ते अस्वास्तान्नयति स्वमित्यस्वनः। महांश्चासावस्वनश्चेति महास्वनः। महांश्चासावसुश्चेति महाऽसुर्वायुस्तमनयतीति वा। गम्भीरस्वनो वा। न विद्येते आदिनिधने यस्य सोऽनादिनिधनः। अनस्य मुख्यप्राणस्यादिनिधने यस्मादिति वा। अनं मुख्यप्राणमनतीत्यनात्। एः कामस्य निधनं यस्मादुद्रान्तर्यामिनृसिंहरूपादिति इनिधनः। अनाच्चासाविनिधनश्चेति वा। नादो भगवद्विषयगानादिरूपो येषामस्तीति नादिनस्तेषां निधनं यस्मात्स नादिनिधनः स न भवतीत्यनादिनिधन इति वा गानप्रियत्वात्॥ धाता धारणपोषकश्च। डुधाञ् धारणपोषणयोः। धाता विधाता परमोत सन्दृगिति श्रुतेः॥ विगरुडो धाता धारको यस्येति विधाता। विगतौ धातारौ धारकपोषकौ यस्येति वा। वीनां विशिष्टानां मुक्तानां धारकत्वाद्वा॥ धातुभिस्तदुपलक्षितशब्दैरुवते शब्द्यत इति धातुरुत्। अतिशयेन धातुरुत् धातुरुत्तमः। धातुभिस्तत्प्रकृतिकाख्यातादिभी रौति व्यवहरतीति धातुरुत् हनुमांस्तेन तम्यते इष्यत इति वा धातुश्चतुर्मुखादुत्तम इति वा॥ ५॥

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः॥

भा०-॥ अप्रमेय इति । न विद्यन्ते प्रमातुं योग्याः परिच्छिन्ना गुणा यस्यासावप्रमेयः । प्रमितसर्वज्ञत्वेन न विद्यते प्रमेयं ज्ञातव्यं यस्येति वा । ज्ञातव्याश्चैव ध्यातव्या गुणाः सर्वेऽप्यतो हरेरित्युक्तेः, प्रकृष्टा मेया भक्तज्ञेया गुणा यस्यासौ प्रमेयः । अश्चासौ प्रमेयश्चेति वा । प्रकृष्टा च सा मा च प्रमा लक्ष्मीस्ताम् इं विस्मयं यापयतीति प्रमेयः । अश्चासाविति प्राग्वत् ॥ हृष् तुष्टावित्यतो भावे कप्रत्यये हृषो हर्षः सोऽस्यास्तीति हृषी ई रमा को ब्रह्मा च ईकौ तयोरीशः ईकेशो हृषी चासावीकेशश्चेति हृषीकेशः । हृषिण ईकेशा रमाब्रह्मरुद्रा येनेति वा । हृषीकाणीन्द्रियाणि तेषामीश इति वा । पद्मं नाभौ यस्यासौ पद्मनाभः । पद्मोर्मा यस्यासौ पद्मः नाभे राज्ञोऽयं वृषभरूपेणेति नाभः । न विद्यते अभा अप्रकाशो यस्येति वा नाभः । पद्मश्चासौ नाभश्चेति वा । पद्मं नयतीति पद्मनः सूर्यस्तस्याभेवाभा यस्येति वा ॥ गत्यर्थादमतेर्भावेऽचि अमं ज्ञानं राति ददातीत्यमरः । न विद्यते मा मितिर्यस्य स तदमम् । अमं रं रमणं यस्येति वा । अस्य विष्णोर्मा ज्ञानं येषां ते अमास्तान् राजयतीति वा । प्रकर्षेण भवतीति प्रभुः । अमरश्चासौ प्रभुश्चेत्यमरप्रभुः ॥ ५० ॥ विना गरुडेन शुवति गच्छतीति विशुः । न विद्यते कर्म बन्धकं यस्येति वा, न विद्यते कर्म क्लिष्टं यस्येति वा अकर्मा । विशुश्चासावकर्मा चेति विश्वकर्मा । विश्वं कर्म यस्मादिति वा ।

न ऋते तत्क्रियत इति श्रुतेः ॥ अवबोधरूपत्वान्मनुः ॥ त्वष्टा दीप्तः ॥ स्थविष्ठोऽत्यन्तस्थूलः ॥ स्थविरो वृद्धः; प्रवयाः स्थविरो वृद्धः इत्यमरोक्तेः ॥ ध्रुव स्थैर्ये इत्यतो ध्रुवः स्थिरः ॥ ६ ॥

**अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।**
**प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥ ७ ॥**

भा०–॥ अग्राह्य इति । साकल्येन ग्राह्यो न भवतीत्यग्राह्यः । सर्वस्यापि गृहीतत्वेन न विद्यते ग्राह्यं यस्येति वा । ग्रह उपादाने । ग्राह्यो न भवतीत्यग्राह्यः । अह व्याप्तावित्यतो ण्यत् । आह्यो गुणैर्व्यापनीयोऽग्रश्चासावाह्यश्चेति वा ॥ शाश्वतः सदैकरूपः ॥ नियमनादिना सकललोककर्षणात्कृष्णः । तच्चोक्तम् । यतः कर्षसि देवेश नियम्य सकलं जगत् । अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिन इति महाकौर्मे ॥ लोहिते रक्ते स्वभावात्सलक्षणे हिरण्यकशिप्वादिशत्रुषु कोपाद्वा रक्ते अक्षिणी यस्य स लोहिताक्षः ॥ ६० ॥ प्रतर्दनः शत्रुहिंसकः ॥ प्रकर्षेण भवतीति प्रभुः । ऊ तन्तुसन्ताने द्रौपद्यर्थे यस्मात्स प्रभूतः । प्रकर्षेण भवतीति प्रभुः । स चासौ गुणैरूतो व्याप्तश्चेति वा । प्रकृष्टानि भूतान्याकाशादीनि यस्मादिति वा । आत्मन आकाशः संभूत इत्यादिश्रुतेः ॥ तिस्रः ककुभो धाम गृहं यस्य सत्त्रिककुब्धाम । त्रिककुद्धामेति पाठे, तथैवासं त्रिककुदो

वाराहं रूपमास्थितः । त्रिककुत्तेन विख्यातः शरीरस्य प्रमापनादिति मोक्षधर्मोक्तेः, त्रयः ककुदो वराहावतारे भुजद्वयं कन्दमूलं चेति यस्य तत्तथेत्यर्थः ॥ पुनातीति पवित्रम् । कुलिशं भिदुरं पविरित्यभिधानात्पविवद्वज्रवत्त्रायत इति वा । पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम् । पर्यायवाचका ह्येते चक्रस्य परमात्मन इति श्रीपञ्चरात्रशास्त्रोक्तेः । पवित्रं चक्रमस्यास्तीति वा ॥ मङ्गलं कल्याणरूपम्, दातृतया मङ्गलवत्त्वाद्वा ॥ परं सर्वोत्तमं सर्वविलक्षणं वा ॥ ७ ॥

**ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।**
**हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ ८ ॥**

भा०—॥ ईशान इति । ईशं रुद्रमानयति चेष्टयतीतीशानः । ई लक्ष्मीस्तस्याः शं सुखं यस्मात्स ईशः । अनः अनस्यायं स्वामी आनः ईशश्चासावानश्चेति वा । मुक्तचेष्टकत्वाद्वा । ईशानामपि मुक्तानामीशानः सोनताच्छ्रुत इति माण्डूकभाष्योक्तेः । प्राणान्ददातीति प्राणदः ॥ प्रकर्षेणाणं सुखविरुद्धदुःखं द्यति खण्डयतीति वा । प्रकृष्टचेष्टकत्वाद्वा प्राणः ॥ ज्येष्ठः श्रेष्ठो गुणैः कालेन वा वृद्धतमः, प्रशस्ततमः प्रशस्यतमः ॥ प्रजापालकत्वात्प्रजापतिः, प्रजानां पालनाद्विष्णुः प्रजापतिरितीर्यत इति षट्प्रश्नभाष्योक्तेः । प्रकर्षेण जनयतीति प्रजः । न विद्यते

पतिर्यस्य सोऽपतिः । प्रजश्चासावपतिश्चेति वा प्रजापतिः ॥ ७० ॥ इर्य गतिकान्त्योरित्यस्माद्धूर्यतेऽनेन क्षान्तिरिति व्युत्पत्त्या हिरण्यं सुवर्णात्मकं ब्रह्माण्डं गर्भे यस्य स हिरण्यगर्भः ॥ स्वसादित्वाद्-व्ययात्मकऋशब्दवाच्यस्वर्गे भान्तीति ऋभा देवा भुवं गच्छन्तीति भूगा ऋभा यस्मात्स भूगर्भः । भूर्गर्भे यस्येति वा ॥ माया धवो माधवः । मधोरयं तद्वंशत्वाद्वा । न विद्यते धवो यस्येति वा । मध्वित्यानन्द उद्दिष्ट इत्युक्तेर्मधु सुखं सुष्ठु उदं कर्म ज्ञानं वा येषां ते सूदाः । अ इत्युक्तः परो विष्णुरेभ्यः उच्चः स एव तु । त उदा जीवसञ्ज्ञाः स्युरिति तैत्तिरीयभाष्योक्तेरुदा जीवाः । शोभनाश्च त उदाश्चेति वा सूदाः सज्जीवाः । मधु सूदान्नयतीति मधुसूदनः । मधुं सूदयतीति वा मधुसूदनः । षूद क्षरणे ॥ ८ ॥

## ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
## अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥

भा०—॥ ईश्वर इति । ईशेभ्यो ब्रह्मादिभ्यो वर ईश्वरः । अस्य स्त्री ई लक्ष्मीः श्वा वायुः । श्वा वै वायुः श्वसनादिति ऋग्भाष्योक्तेः । ईश्वभ्यां राजत इति वा ॥ विक्रमोऽस्यास्तीति विक्रमी । क्रमस्तारतम्यमस्यास्तीति क्रमी । विप्रिय इत्यादिवत् विशब्दो नञर्थे । न क्रमी विक्रमी स्वावतारेषु तारतम्यरहित इति वा ॥ धनुरस्यास्तीति धन्वी ॥ मेधाऽस्यास्तीति मेधावी ॥

विशेषेण क्रमः पादविक्षेपो यस्यासौ विक्रमः। क्रमु पादविक्षेपे इति धातोः। क्रमदेवत्वात्क्रमः। स्पष्टं चैतदैतरेयभाष्ये। पृथिवीस्थो वराहस्तु संहिता देवतोदिता। दिविष्ठो वामनश्चैव संप्रोक्ताः पददेवताः। नृसिंहस्त्वन्तरिक्षस्थो भगवान्क्रमदेवतेति ॥ ८० ॥ न विद्यते उत्तमो यस्मादित्यनुत्तमः। न विद्यते नुत्प्रेरको यस्य सोऽनुत्। नुद प्रेरणे। अतिशयेनानुत् अनुत्तमः। नुत्तनुन्नास्तनिष्ठ्यूता विद्धक्षिप्तेरिताः समा इति कोशात्। नुत्ता तिरस्कृता न नुत्ताऽनुत्ता अतिरस्कृता मा संपज्ज्ञानं वा यस्येति वा। क्लिन्नं तिमितं समुन्नमुत्तं चेत्यमरोक्तेः। अनुत्ता अक्लिन्ना रमा यस्येति वा॥ आधर्षयितुमशक्यो दुराधर्षः। श्रुतिस्मृती हरेराज्ञे इत्युक्तेः॥ कृतं कर्म ज्ञापयतीति वा। कृतं स्वाराधनरूपमुपकारं जानातीति वा। कृतानित्यान्सर्वपदार्थान् जानातीति वा कृतज्ञः। कृता उत्पादिता ज्ञा जीवा येनेति वा। यतो वा इमानि भूतानीति श्रुतेः॥ प्रयत्नरूपत्वात्कृतिः॥ आत्मा विरिञ्चः सुमनाः सुधौतश्चेति कथ्यत इति वचनादात्मा चतुर्मुखस्तद्वानात्मवान्। आत्मा देहो नित्यमस्यास्तीति वा ॥ ९ ॥

**सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।**
**अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥**

भा०— ॥ सुरेश इति । सुरा समुद्रोत्था येषामस्तीति सुराः । सुष्ठु राजन्त इति वा । राजृ दीप्तौ । सुराणामीशः सुरेशः ॥ शरणमाश्रयो रक्षिता वा । शरणं गृहरक्षित्रोरित्यमरः ॥ शर्म शृणात्यशुभं शॄ हिंसायाम ॥ विश्वरेता जगत्कारणम् । भुवनस्य रेतो विष्णोरिति श्रुतेः । विश्वो वायुस्तत्कारणं वा । विश्वो वायुः समुद्दिष्ट इत्युक्तेः ॥ प्रजनयन्तीति प्रजा भगवतो ज्ञापयितारः । इन्द्र एकं सूर्य एकं जजानेति श्रुतेः । यस्ता विजानात्स पितुः पितासदिति श्रुतेः । न विद्यते भव उत्पत्तिर्यस्मिन्यस्येति वा अभवो वकुण्ठादिः । प्रजानामभवो यस्मात्स प्रजाभवः । प्रजानां भव उत्पत्तिर्यस्मादिति वा । प्रजाश्च भानि च तानि वर्तयतीति वा ॥ ९० ॥ हन्यमानत्वात् हः जीवः स न भवतीत्यहः । हेयो न भवतीति वाऽहः । ओहाक् त्याग इति धातोः ॥ संवत्सरः संवसत्यत्रेति संवत्सरः ॥ व्यालः वि आङ्पूर्वात् अड उद्यम इति धातोः, अच्प्रत्यये डलयोरभेदे व्यालः । भक्ताभीष्टदानोद्योगवान् । अलम्भूषणपर्याप्तिवारणेष्विति धातोरच्प्रत्यये निष्पन्नालशब्दात् समूहार्थे अणि अलानां भूषणानां समूह आलम् कौस्तुभादिकं विशेषेणालं यस्येति वा । विशेषेणालति सृष्ट्यादिकार्ये पर्याप्तो भवतीति वा । शत्रून्वारयतीति वा । विशेषेणासमन्ताज्जगतः क्षयो यस्मादिति वा । लीङ् श्लेषण इत्यतो डप्रत्यये विशेषेणासमन्तात् श्लेषो यस्येति वा । लस् प्रकाशन इत्यतो भावे डप्रत्यये विशेषेणासमन्तात्

प्रकाशनं यस्येति वा ॥ प्रत्ययो ज्ञानरूपः ॥ प्रति विषयान् अयते जानातीति । अय पय गताविति धातोः । सर्वविषयकत्वात् सर्वं दर्शनं यस्यासौ सर्वदर्शनः । ईश्वरः सर्व ईशान इति द्विरूपकोशात् षर्व हिंसायामित्यतः पचाद्यचि धात्वादेः षः स इति सत्वे च सर्वो रुद्रस्तस्य दर्शनं ज्ञानं यस्मादिति वा । सर्वे च ते दर्शाश्चामावास्याश्च तेषु हविरादिकं नयतीति सर्वदर्शनः ॥ १० ॥

**अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।**
**वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ ११ ॥**

भा०– ॥ अज इति । न जायत इत्यजः । अज गताविति धातोर्गन्ता वा । सर्वेषामीश्वरः सर्वेश्वरः ॥ षिध गत्यामिति धातोः सिद्धो गम्यः । निश्चयज्ञानरूपो वा । सिद्धो भक्तरक्षणाय ॥ निरतिशयरूपत्वात्सिद्धिः । सर्वकारणत्वात् सर्वादिः । सर्वैरादित उपादीयत इति वा सर्वमत्तीति वा ॥१००॥ देशतः कालतो गुणतश्च च्युतिरहितत्वादच्युतः । वर्षणाद्वृष आकं सुखं पिबतीत्याकपिः । वृषश्चासावाकपिश्चेति वृषाकपिः । वृषेण धर्मेणाकं दुःखं पिनष्टीति वा ॥ अमेयात्मा साकल्येन ज्ञातुमशक्यस्वरूपः ॥ सर्वे च ते योगाश्च सर्वयोगाः सर्वोपाया विनिःसृता यस्मात् ॥ ११ ॥

**वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः ।**
**अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥**

भा०–॥ वसुरिति । सर्वत्र वसतीति वसुः । वं ज्ञानं सूत इति वा ॥ वसुमना भक्तसमर्पितवसुनि तोये द्रव्ये वा स्वमन्तक्रमणौ वा मनो यस्य स तथा ॥ सद्भावं यापयतीति सत्यः । सद्भावं यापयेद्यस्मात्सत्यं तत्तेन कथ्यत इत्युक्तेः ॥ समात्मा मा रमा आत्मा चतुर्मुखस्ताभ्यां सहितस्तथा । सारत्वात्सः । मायामात्मा यस्येति वा । माया आत्मा मनो यस्मिन्निति वा मात्मा । स चासौ मात्मा चेति वा । मया ज्ञानेन सहिताः समा ज्ञानिनस्तेषामात्मेति वा ॥ सं सम्यक् मितः प्रमाणैरिति सम्मितः । सम्यङ्मितं जगत्त्रितयं येनेति वा ॥ मितजगत्त्रितयाय जिताय इत्युक्तेः । सम्यङ् मितो न भवतीत्यसम्मित इत्यप्याहुः ॥ मया लक्ष्म्या माभिर्वेदैः प्रमाणैर्वा सहितत्वात्समः । सर्वत्र सर्वरूपेषु समत्वाद्वा । तत्तद्योग्यफलदातृत्वात्समः ॥ न विद्यते मोघं जगत्सर्जनादिकं यस्येत्यमोघः । यच्चिकेत सत्यमित्तं न मोघमिति श्रुतेः ॥ ११० ॥ पुण्डरीके इवाक्षिणी यस्य स पुण्डरीकाक्षः । पुण्डरीकोऽग्निः स एवाक्षि तृतीयं यस्य नृसिंहस्य स इति वा । पुण्डरीकनामकमुनावक्षि कृपादृष्टिर्यस्येति वा ॥ पुण्यश्रेयसी सुकृतं वृष इत्युक्तेर्वृषकर्मा पुण्यकर्मा । वृषाणां नासावेधादिकर्म यस्य स इति वा । तदुक्तं भागवते ।

बद्ध्वा तान्दामभिः शौरिर्भग्नवीर्यान्हतौजसः । अकर्षल्लीलया बद्धान् बालो दारुमयान्यथेति ॥ वृषवत् पुष्टा आकृतिर्यस्य स वृषाकृतिः ॥ १२ ।

**रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।**
**अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥**

भा०—॥ रुद्र इति । रुजद्रावकत्वाद्रुद्रः । ब्रह्माण्डे च रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दन इति भाष्योक्तेः । रोदयतीति रुद्रः । रुदं शब्दं भेर्यादीनां राति ददातीति वा । रुदा भक्तकृतस्तुतिशब्देन रमत इति वा ॥ बहूनि शिरांसि यस्यासौ बहुशिराः । बहवः शिरा नाड्य आवासस्थानत्वेन यस्य स बहुशिराः ॥ बिभर्ति जगदिति बभ्रुः ॥ विश्वं जगद्योनिः स्थानं यस्येति वा । विश्वस्य वायोः कारणमिति वा । योनिर्भार्या तथा स्थानं योनिः कारणमेव चेति गीतातात्पर्योक्तेः ॥ शुचिश्रवाः शुद्धकीर्तिः पवित्रकरविद्यो वा । शुचीनि श्रवणीयानि शृणोमीह धनञ्जय । न च पापानि गृह्णामि ततोऽहं वै शुचिश्रवा इति मोक्षधर्मोक्तेः श्रवणीयश्रवणकर्ता वा ॥ अमृतमनन्तासनमाधारत्वेन यस्य सोऽमृतः । ब्रह्म पूर्णगुणत्वाच्च नित्यत्वादमृतं तथेत्यैतरेयभाष्योक्तेरमृतो नित्यः । अममपरिमितं ऋतं शास्त्रं यस्मिन्सोऽमृतः ॥ शाश्वतो

नित्यः । यद्वा शशशब्दस्यात्यन्तसुखवाचित्वेन शशमान इत्यृग्व्याख्यानावसरे शशशब्दः सुखवाची । द्विर्वचनमतिशयार्थे । शशमधिकं सुखमेषामस्तीति शश्वन्तो मुक्तास्तेषामयं स्वामी शाश्वत इति ॥ तिष्ठत्यस्मिन्निति स्थाणुः । शाश्वतश्चासौ स्थाणुश्चेति शाश्वतस्थाणुः ॥ १२० ॥ वरारोहः वर आरोहो वाहनमङ्कं वा यस्येति वरारोहः । वराण्यवराणि येषां ते वरारास्तेभ्योऽप्युत्कृष्टाः वरारोहः परो वरीयानित्यत्र परोशब्दवत्तान्हन्तीति वरारोहः ॥ महातपा महत्तपो ज्ञानं यस्य सः । यस्य ज्ञानमयं तप इत्युक्तेः । कपिलादिरूपेण तपस्वी वा ॥१३॥

**सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।**
**वेदो वेदविदव्यंगो वेदांगो वेदवित्कविः ॥**

भा०-॥ सर्वग इति । सर्वत्र गच्छति सर्वं जानातीति वा सर्वगः ॥ सर्वं वेत्ति सर्वं विन्दति सर्वत्र विद्यत इति वा सर्वं वेदयतीति वा सर्ववित् । विद् ज्ञाने विदॢ लाभे विद सत्तायां विदोत्पत्ताविति धातुभ्यः सर्वज्ञः सर्वलाभः सर्वगतः सर्वोत्पादकः ॥ भातीति भानुः । विष्वक्सेनः । विषुशब्दो नानार्थे निपातितः । विषु नाना अञ्चति ऋत्विगिति विवन् उगितश्चेति ङीप् । विषूची सेना यस्य सः विष्वक्सेनः ॥ जनार्दनः जनो जननं तमर्दयतीति जनार्दनः । अर्द हिंसायाम् । जनाः समुद्रस्था

दैत्यविशेषास्तेषामर्दनः । न जायते जनोऽर्दयति संसारमित्यर्दनः। जनश्चासावर्दनश्च जनार्दनः । जनैरर्ध्यते याच्यते गम्यत इति वा ॥ वेदयतीति वेदः ॥ वेदं वेत्तीति वेदवित् ॥ अव्यङ्गः अविः सूर्योऽङ्गे चक्षुषि यस्यासावव्यङ्गः । विकलाङ्गो न भवतीति वा । अविरङ्गं यज्ञाङ्गं यस्मादिति वा । नञो विरुद्धार्थकत्वेन विः गरुत्मांस्तद्विरुद्धोऽविः शेषस्तस्मिन्नङ्गं यस्येति वा ॥ वेदा वेदाभिमानिदेवा वेदास्तन्नाम्नी रमा वा । अङ्गे यस्येति वा ॥ इतिहासपुराणाभ्यां वेदं समुपबृंहयेदित्यादेः वेदस्याङ्गं भारतादिकं यस्मादिति वा ॥ १३० ॥ वेदं विन्दयति प्रापयति मत्स्यादिरूपेण ब्रह्मादीन्प्रतीति वेदवित् ॥ कविः । कु शब्देऽच इरिति इः । स्तुत्यः ॥ १४ ॥

## लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
## चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥

भा०—॥ लोकाध्यक्ष इति । प्रकाशरूपत्वाल्लोकोऽध्यक्षोऽधिपतिः । स चासावध्यक्षश्चेति लोकाध्यक्षः । लोकानामधि लोकाधि न विद्यते क्षं क्षयो यस्य सोऽक्षो लोकाधिश्चासावक्षश्चेति । लोकानामध्यक्ष इति वा । सुष्टु राध्य आराध्यः साध्यो वा । क्षयं यत्रेति क्षः । क्षि निवासगत्योरित्यतो डः । सुराध्यश्चासौ क्षश्च सुराध्यक्षः । सुराधिकत्वात्सुराधि देवेन्द्रस्तस्याक्षीणि यद्विषये

स इति वा। धर्माध्यक्षः धारकत्वाद्धर्मः अध्यधिकान्यक्षाणि इन्द्रियाणि यस्य सोऽध्यक्षः। धर्मश्चासावध्यक्षश्च। धर्मस्याध्यक्ष इति वा॥ कृताकृतः कृतेन कर्मणा अकृतः कृताकृतः, कृतोऽकृतो मोक्षो येनेति वा॥ चतुरात्मा। अत सातत्यगमन इति धातोर्मनिन् प्रत्यये अततीत्यात्मा चतुरश्चासावात्मा चेति वा। चतुरः कुशल आत्मा चतुर्मुखो यस्मादिति वा॥ चतुर्व्यूहः चत्वारो व्यूहा वासुदेवाद्या आत्माद्या वा यस्यासौ॥ चतस्रो दंष्ट्रा यस्य स चतुर्दंष्ट्रः॥ चत्वारो भुजा यस्य। भुङ्क्ते भुनक्तीति वा भुजः। चतुर्णां धर्मार्थकाममोक्षाणां भुजश्चतुर्भुजः। चतुर्भ्यो वेदेभ्यो भवतीति चतुर्भु ज्ञानं तेन जायतेऽभित्याज्यते वा॥ १४०॥ १५॥

**भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः।**
**अनघो विजयो जेता विश्वयोनिः पुनर्वसुः॥**

भा०-॥ भ्राजिष्णुरिति। भ्राजिष्णुर्दीप्तिमान्॥ भुज्यते सर्वैरुपजीव्यत इति भोजनम्॥ सर्वसारभोक्तृत्वाद्भोक्ता॥ सहिष्णुः भक्तापराधसहनशीलः॥ जगत आदिः कारणं जगदादिश्चतुर्मुखः स जायते यस्मात्, गदस्य आदिजो गदादिजः। जश्चासौ गदादिजश्चेति वा॥ न विद्यतेऽघं पापं तदुपलक्षितयावद्दोषो यस्य सोऽनघः॥ विशेषेण जयो यस्य स विजयः।

विः पक्षी गरुडो वैजयो यस्मादिति वा । जयशीलत्वाज्जेता ॥ विना गरुडेन शवति गच्छतीति विशुः न विद्यते योनिः कारणं यस्येत्ययोनिः । विशुश्चासावयोनिश्चेति विश्वयोनिः । पुनः पुनः वसु द्रव्यं यस्मात्स पुनर्वसुः ॥ १५० ॥ १६ ॥

**उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।**
**अतीन्द्रः सङ्ग्रहः सर्गो धृतात्मा नियमो यमः ॥**

भा०-॥ उपेन्द्र इति । उपगत इन्द्रोऽनुजत्वेनोपेन्द्रः । वामानि सुन्दरवस्तूनि नयतीति वामनः । वामं शत्रुं तमो नयतीति वा ॥ त्रिविक्रमरूपेणोन्नतत्वात्प्रांशुः । प्रकृष्टा अंशवो यस्येति वा ॥ न विद्यते मोघः सङ्कल्पो वाक्यं वा यस्य सोऽमोघः ॥ शुचिः शुद्धः ॥ ऊर्जं सारमन्नमेषामस्तीति ऊर्जा अन्नदातारस्तांस्तनोतीत्यूर्जितः ॥ इन्द्रमतिक्रान्तोऽतीन्द्रः । सङ्गृह्णाति भक्तानिति सङ्ग्रहः । सं समीचीना ग्रहाः पात्रविशेषा यस्मा इति वा । समीचीना ग्रहाः सूर्यादिग्रहा यस्मिन् शिशुमाररूपे स इति वा ॥ सृजतीति सर्गः ॥ धृतात्मा धीरमनाः । धृता आत्मानो जीवा येनेति वा । धृत आत्मा मनो ऋषिभिर्यस्मिन्निति वा ॥ १६० ॥ नियमयतीति नियमः ॥ यमो नियमनाद्धरिरित्युक्तेर्नियन्ता । न विद्यते यमो नियामकः सदृशो वा यस्य । अयं शुभावहविधिं माति जानातीति वा अयम इति वा छेदः ॥ १७ ॥

**वेद्यो वैद्यस्सदायोगी वीरहा माधवो मधुः ।**
**अतीन्द्रियो महामायो महोत्साहो महाबलः ॥**

भा०-॥ वेद्य इति । वेद्यो ज्ञेयः ॥ भवरोगपरिहारकत्वाद्वैद्यः । प्रतिपाद्यतया सकलविद्यासम्बन्धित्वाद्वैद्यः ॥ सदायोगी कपिलादिरूपेण ॥ विगत ईरो वायुर्येभ्यस्ते वीरा वायुद्वेषिणो वीरान्हन्तीति वीरहा । विगरुड ईरो वायुस्ताभ्यां हन्ति गच्छतीति वा । हन हिंसागत्योः ॥ मा धूयत इति माधवः । धूञ् कम्पन इत्यतोऽच् । सुखरूपत्वान्मधुः ॥ अतिक्रान्त इन्द्रियाण्यतीन्द्रियो बहुलेन्द्रियो वा ॥ महती च सा मा च महामा रमा । तस्या अयः यस्मात्स महामायः । अम गत्यामित्यतोऽमन्ति जानन्तीत्यमा ज्ञानिनः । महान्तश्च तेऽमाश्च तेषामय आयो यस्मादिति वा । न विद्यते माया कपटं यस्येत्यमायः । महांश्चासावमायश्चेति वा । महती माया इच्छा यस्येति वा । महामायेत्यविद्येत्युक्तेः ॥ १७० ॥ महानुत्साहो जगत्सृष्ट्यादिव्यापारेषूद्योगो यस्य सः । महेषु यज्ञाद्युत्सवेषूत्साहो यस्येति ॥ महद्बलं यस्य सः । महती अबला रमारूपा यस्येति वा । बलनामकासुरविरुद्धत्वादबल इन्द्रो महान्यस्मादिति वा ॥

**महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।**
**अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥**

भा०—॥ महाबुद्धिरिति । महती बुद्धिर्यस्य स महाबुद्धिः ॥ महद्वीर्यं यस्य स महावीर्यः ॥ महती शक्तिर्यस्य स महाशक्तिः । अननुग्रहानुग्रहाभ्यां महान्तः शक्तयो यस्मात् ॥ महती द्युतिः सूर्यप्रकाशो यस्मादिति वा यस्येति वा । तमेव भान्तमनुभाति सर्वमिति श्रुतेः । रूपनी पाचिका चैव शोषणी च प्रकाशिनी । नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य चेति नृसिंहपुराणोक्तेः ॥ निर्देष्टुमशक्यं वपुः शरीरं यस्य सोऽनिर्देश्यवपुः । अनामा सोऽप्रसिद्धत्वादित्युक्तेः । निर्देशी न भवतीत्यनिर्देशी । अरूपो भूतवर्जनादित्युक्तेरवपुः । अनिर्देशी चासाववपुश्चेति वा । उपमानत्वेन निर्देशशून्यः । अवपुः कामो यस्येति वा । कामापेक्षयाऽत्यन्तसुन्दरः । साक्षान्मन्मथ मन्मथ इत्युक्तेः ॥ श्रीरस्यास्तीति श्रीमान् ॥ साकल्येन ज्ञातुमशक्य आत्मा स्वरूपं यस्य सोऽमेयात्मा । श्रिया मानैर्मेय आत्मा यस्य सः श्रीमानमेयात्मेत्यपि पठन्ति ॥ महांश्चासावद्रिश्च मन्दरो गोवर्धनो वा । अद्रिरादरणीयत्वात्प्राण इत्युक्तेः प्राणो वा तान्धरतीति महाद्रिधृक् ॥ १८० ॥ १९ ॥

**महेष्वासो महीभर्ता श्रीनिवासस्सतां गतिः ।**
**अनिरुद्धस्सुरानन्दो गोविन्दो गोविदांपतिः ॥**

भा०—॥ महेष्वास इति । महानिष्वास इषुधिः यस्यासौ

महेष्वासः। इषु इच्छायामित्यतो महानिषुः इच्छा बाणो वा यस्यासौ महेषुः। आ समन्तात्स एवेत्यासः सर्वगतः। महेषुश्चासावासश्चेति वा ॥ महीभर्ता मह उत्सवोऽस्यास्तीति मही। याः लक्ष्म्याः एः कामस्य वा भर्ता ईभर्ता इभर्ता वा। मही चासौ स चेति महीभर्ता। मह्या भर्ता वा ॥ श्रीर्निवसत्यस्मिन्निति श्रीनिवासः। श्रियं नयतीति श्रीनिः वामनिर्भामनिरितिवत्। वस्ते आच्छादयति सर्वं वासयति च वसति सर्वत्रेति वा वासः। श्रीनिश्चासौ वासश्चेति श्रीनिवासः ॥ सताङ्गतिः। ताऽऽनन्देन सहिताः सन्तः आविर्भूतस्वरूपा मुक्तास्तेषां गतिः। अथवा षद्लृ विशरणगत्यवसादनेष्विति धातोर्विशीर्णानामत्रसन्नानामार्तानां गतिमतां ज्ञानिनां वा गतिः ॥ अनिरुद्धः केनापि रुद्धो न भवतीत्यनिरुद्धः। ज्ञानिनः प्रति निरोधरहितत्वादनिरुद्धः। अनो मुख्यप्राणो येषामस्तीत्यनिनस्तैर्हृदि निरुध्यत इत्यनिरुद्धः। न विद्यते निरुक्त् वेदादिरूपः शब्दो येषां तेऽनिरुतो वेदविरुद्धाचारास्तान्हन्तीति वा ॥ सु शोभनज्ञानं राति ददात्यानन्दयति चेति सुरानन्दः ॥ गोविन्दो गां भुवमिषुं धेनुं स्वर्गं वेदं वा विन्दतीति गोविन्दः ॥ गोविदां पतिः गोविदां वेदवेत्तृणां जलचराणां पतिः ॥ २० ॥

**मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः।**
**हिरण्यनाभस्सुतपाः पद्मनाभः प्रजापतिः ॥**

भा०-॥ **मरीचिरिति** । म्रियते तमोऽनेनेति मरीचिः । मरमुदकं येषामस्तीति मरिणस्तान् चालयतीति वा ॥ दमनासुरसंहारकत्वाद्दमनप्रियत्वाद्वा दमनः । दमो येषामस्तीति दमास्तान्नयतीति वा दमभीष्टदात् मनो यस्य स इति वा ॥ १९० ॥ दोषहीनत्वात् हं सारत्वात्सः । हं चासौ सश्च हंसः । नित्यं हीनोऽखिलैर्दोषैस्सारस्वरूपो यतो हरिः । हंसः इत्युच्यते तस्मादिति काठकभाष्योक्तेः ॥ सुष्ठु परमानन्दरूपत्वात्सुपर्णः ॥ भुज कौटिल्य इत्यतो भुजाः सन्तो गच्छन्तीति भुजगाः सर्पास्तेषामुत्तमः शेषो यस्य शय्यात्वेन स भुजगोत्तमः । भुजेन कौटिल्येन गच्छन्तीति भुजगास्तमोयोग्यास्तेषामुत् उत्कृष्टं तमो यस्मात्तदिति वा ॥ णभ् हिंसायामित्यतो घञि नाभो हिंसको हिरण्यस्य तन्नामकासुरस्य नाभो हिरण्यनाभः ॥ शोभनं तपो ज्ञानं यस्य सः सुतपाः । पा रक्षण इत्यतः सुतं चतुर्मुखं पातीति वा सुतपाः । सुतमभीष्टितं सोमरसं पिबतीति वा । पद्मश्चतुर्मुखो नाभौ यस्येति पद्मनाभः । पदं भगवत्स्वरूपं मन्यत इति पद्मना भगवद्भक्तास्तान्प्रत्याभातीति पद्मनाभः ॥ प्रजानां पतिः प्रजापतिः । जप् व्यक्तायां वाचि जप मानसे चेत्यतो वा प्रकृष्टो जापः स्तुतिर्ध्यानं वा येषां ते प्रजापास्तेषां त आनन्दो यस्मादिति प्रजापतिः । आनन्दन्तीति वै वदेदिति प्रमाणात् ॥ २१ ॥

**अमृत्युस्सर्वदृक् सिंहःसन्धाता संधिमान् स्थिरः ।**
**अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥**

भा०–॥ अमृत्युरिति । न विद्यते मृत्युर्यस्य यस्मादिति वा अमृत्युः ॥ सर्वं पश्यतीति सर्वदृक् ॥ सिञ्चतीति सिंहः षिच् क्षरणे चकारस्य हकारादेशो नुमागमश्च । यद्वा हिनस्तीति सिंहः । सिंहो वर्णविपर्ययादित्युक्तेः ॥ सन्धाता सम्यग्धारणपोषणकर्ता रामादिरूपेणाहल्यादीनां गौतमादिभिः सन्धानकर्तृत्वाद्वा ॥ २०० ॥ सुग्रीवविभीषणादिभिः सन्धिविष्टत्वात्सन्धिमान् ॥ अनादिनित्यत्वात्स्थिरः ॥ न जायत इत्यजः ॥ मर्षयितुमशक्यत्वाद्दुर्मर्षणः ॥ जगच्छासकत्वाच्छास्ता ॥ विश्रुतात्मा प्रसिद्धस्वरूपः ॥ सुरारीन्दैत्यान्हन्तीति हनिष्यतीति वा सुरारिहा ॥ २२ ॥

**गुरुर्गुरुतमो धामस्सत्यः सत्यपराक्रमः ।**
**निमिषोऽनिमिषस्स्रग्वी वाचस्पतिरुदारधीः ॥**

भा०–॥ गुरुरिति । गृणातीति गुरुः । अतिशयेन गुरुर्गुरुतमः । गुरुः श्रीब्रह्मणोर्विष्णुः सुराणां च गुरोर्गुरुः । मूलभूतगुरुः सर्वजनानां पुरुषोत्तम इति दशमतात्पर्योक्तेः । गुरुभिर्ब्रह्मादिभिस्तम्यतेऽभिकाङ्क्ष्यत इति वा । गुरोर्बृहस्पतेस्ता

विस्तृता मा ज्ञानं यस्मादिति वा । तमोऽतिशयेन व्याप्तः । गुरुश्चासौ तमश्चेति वा ॥ धामस्तेजोरूपः ॥ २१० ॥ सत्यो जगत्स्रष्टा । सद्भावं यापयेद्यस्मात्सत्यं तत्तेन कथ्यते । सत्त्वं जीवनं विशरणं वा भूतानां यापयतीति सत्यमित्युक्तम् । अथवा सत्यो गतिदाता । तदुक्तम् । उक्तं सदिति धात्वर्थो गतिश्चातो हि सत्येन प्राणत्वमिति । तथा च सत् सत्त्वं गतिं भूतानां यापयतीति सत्यशब्दो गतिप्रदत्वमाह । हरेर्गतिप्रदत्वं प्राणं देवा अनुप्राणन्तीति श्रुतिर्वक्ति । भागवततात्पर्ये तु सत्यं परं धीमहीत्यत्र सत्यमिति प्रतीकमुपादाय निर्दुःखनित्यनिरतिशया-नन्दानुभवरूपमिति व्याख्यातम् । ऐतरेयभाष्ये तु सच्छब्द उत्तमं ब्रूयादिति मानं । तनु विस्तार इति धातुं या प्रापण इति धातुं चाभिप्रेत्य स एष भगवान्विष्णुः सत्यमित्यभिधीयते । सर्वोत्तमत्वात्पूर्णत्वात्सर्वज्ञत्वात्तथैव चेत्युक्तम् । छान्दोग्यभाष्ये तु सदित्यमृतधर्माणो मुक्ताः श्रीरपि चेरिताः । इत्युक्ताः सत्यधर्माणस्तेषां नियमनाद्धरिः । सत्यमित्युच्यते सद्भिरिति व्याख्यातः । अथवा सादयति विशरणादिकं प्रापयतीति सत् यामयति नियच्छतीति यं सच्च तद्यं चेति सत्यम् । तस्योप-निषत्सत्यस्य सत्यमिति एष एवैतत्सादयति यामयति इति प्राचीनशालश्रुतिः ॥ सत्यः पराक्रमो यस्य स सत्यपराक्रमः । सत्यपरे सत्यवचनात्मके बलिचक्रवर्तिनि आ सम्यक् क्रमः

पादविक्षेपो यस्येति वा । वायुः सदिति सम्प्रोक्तो जीवेषु तु सुपूर्णतः । तीति ब्रह्मा समुद्दिष्टः स एवान्नाभिमानवान् । अन्नं प्रजापतिरिति श्रुतिरन्याऽप्यभाषत । अतिनादात्सदा वेदैरप्यन्नं चतुर्मुखः । यमित्यादित्य उद्दिष्टो यमयेद्यत्प्रकाशयन् ॥ देवतात्रयमेतत्तु सहितं सत्यमुच्यते । शुक्लकृष्णकनीनासु चक्षुषोऽप्येत आस्थिताः । एवं सत्यपदार्थं यो विज्ञायोपास्त आदरात् । योग्यस्तस्या उपास्याया नैवासत्येन दुष्यति । देवता मुनयश्चैव योग्या अस्या अपि स्फुटम् । मानुषाणां ज्ञानमात्रा दोषो नानितरा भवेदित्यैतरेयभाष्योक्तेः सत्यशब्दो वायुब्रह्मसूर्यसमुदायस्तेषां पराक्रमो यस्मादिति वा । निमेस्तन्नामकस्य राज्ञः षं बलं यस्मान्निमिषः । नियामकतया निमिषाख्यकालवत्त्वाद्वा । मिष स्पर्धायामिति धातोर्नितरां दैत्यैर्मिषः स्पर्धा यस्येति वा ॥ अनो येषामस्तीत्यनिनो वायुभक्तास्तान्मिषतीत्यनिमिषः । मिष सङ्गम इति धातोः । सर्वदा दयया भक्तान्पश्यतीति वा । स्रजोऽस्य सन्तीति स्रग्वी । वाचां वेदवाक्यानां पतिर्वाचस्पतिः । षष्ठ्या अलुक् विसर्गस्य सकारादेशः ॥ उत्कृष्टा दारा रमा तस्या धीर्यस्मादित्युदारधीः । अराणां समूह आरम् । उद्गता आरा उदारा निर्दोषा धीर्यस्येति वा ॥ २३ ॥

**अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ।**
**सहस्रमूर्धा विश्वात्मा सहस्राक्षस्सहस्रपात् ॥**

भा०—॥ अग्रणीरिति । अग्रे प्रथमे नयतीत्यग्रणीः ॥ ग्रामं भूतग्रामं नयतीति ग्रामणीः ॥ श्रीमान् नित्यलक्ष्मीवान् ॥ २२० ॥ न्यायो नितरामायो लाभो यस्य सः ॥ नेता तत्तद्योग्यफलनियामकः । पुण्येन पुण्यलोकं नयति पापेन पापमिति श्रुतेः ॥ समीरणः समीरस्य वायोः णः सुखं यस्मात् । सं सम्यक् या लक्ष्म्या रणो जय जय जह्यनामिति स्तुतिरूपशब्दो यस्मिन्स इति वा । सं सम्यगीरयति प्रेरयतीति वा ॥ सहस्रं मूर्धानो यस्य सः । मूरं पापं हि तेनोत्थं मूरमित्यभिधीयत इति (?) बृहद्भाष्ये मूरशब्दस्य पापार्थकत्वाभिधानात् । विश्वात्मा विश्वनियामकः । विश्वाभिन्न इति व्याख्यानं तु, भिन्नोऽचिन्त्यः परमो जीवसङ्घात् । सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसमिति बहुप्रमाणविरोधात्पूर्वोत्तरत्र च धर्मोक्तेश्चोपेक्ष्यम् ॥ सहस्राक्षः सहस्रमक्षीणि यस्य सः ॥ सहस्रपात् सहस्रं पादा यस्य सः ॥

**आवर्तनो निवृत्तात्मा संवृतस्सम्प्रमर्दनः ।**
**अहःसंवर्तको वन्हिरनिलो धरणीधरः ॥ २५ ॥**

भा०—॥ आवर्तन इति । आ सम्यग्वर्तनमस्येति ।

आवर्तं नद्यादिगताम्भसां भ्रमं नयतीति वा। निवृत्तात्मा निवृत्ता आत्मानो येन प्रलय इति। यद्वा अनिवृत्तात्माऽनिवृत्त आत्मा देहो यस्य सः॥ संवृतः सम्यग्गुणैर्वृतः॥ सम्यक् प्रमर्दयति दैत्यानिति सम्प्रमर्दनः। २३०॥ अह्नां सम्यक् प्रवर्तकः। न जहाति भक्तानित्यहः॥ संवर्तते जगदत्रेति संवर्तकः। अहश्चासौ संवर्तकश्चेति वा॥ वह्निः जगद्दाहकः॥ अनत्यनेनेत्यनिलः। न विद्यते निलो निलयनं यस्येति वा। न विद्यत इला भूमिराधारभूता यस्येति वा॥ धरण्या धरो धरणीधरः। धरान् पर्वतान्नयतीति धरणीः पर्वतश्रेष्ठो गोवर्धनस्तद्धारकत्वाद्वा॥

**सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः।**
**सत्कर्ता सत्कृतिः साधुर्जन्हुर्नारायणो नरः॥**

भा०—॥ **सुप्रसाद** इति। शोभनो मोक्षजनकीभूतः प्रसादो यस्येति सुप्रसादः। प्रसीदत्यनेनेति प्रसादः सुखं सुष्ठु प्रसादो यस्येति वा॥ प्रसन्न आत्मा मनो यस्य स प्रसन्नात्मा॥ विश्वं धृष्णातीति विश्वधृक्। धृष् प्रगल्भे॥ विश्वं भुङ्क्ते भुनक्ति पालयतीति वा विश्वभुक्॥ विविधं भवतीति विभुर्व्याप्तो वा॥ सन् क्लेशादिरहितश्चासौ कर्ता च सत्कर्ता। सतः सत्यस्य जगतः कर्तेति वा। सताम्, सद्लृ विशरणगत्यवसादनेष्विति धातोः, विशरणादियुक्तानां दैत्यानां कर्ता

हिंसकः ॥ २४० ॥ सती कृतिः सत्यकर्मव्यापारो यस्य स सत्कृतिः । सती कृतिस्तन्नाम्नी भार्या यस्येति वा ॥ साध्नोति परकार्यमिति साधुः ॥ जहात्यये ग्यानिति जन्हुः ॥ नारायणः । दोषारछिद्रशब्दानां पर्यायत्वं यतस्तत इत्युक्तेः, अरा दोषा नञो विरुद्धत्वाद्दोषविरुद्धा नारा गुणास्तदाश्रयत्वान्नारायणः । नञोऽभावार्थत्वादराणामयनं न भवतीति वा । नरसम्बन्धित्वान्न रीयतेऽनेनेति वा । नारमणं येनेति वा । न दोषा येनेति वा निर्दोषवेदोत्पन्नत्वाद्वा नारं ज्ञानं विषयतया तदयनत्वाद्वा । अरविधुरत्वादरतिरहितत्वाद्वा, क्षयरहितत्वान्नारा मुक्तास्तदाश्रयत्वाद्वा । उपकारित्वादिना नराणामिमे नारा वेदादयः प्रतिपाद्यतया तदयनत्वाद्वा । नराणामिदं नारमुद्भवादिदातृतया तदयनत्वाद्वा । नराणां समूहो नारं वन्द्यतया तदयनत्वाद्वा । नराणामधिपतिर्नारो मुख्यवायुः परमप्रेमास्पदत्वेन तदयनत्वाद्वा । आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः इत्युक्तेः । नारा आपोऽयनं यस्येति वा । ना परिवर्तन इत्यतो नरो निर्विकारो रीङ् क्षये रिष् हिंसायामित्यतो वा नरोऽविनाशी वा ॥ २६ ॥

**असङ्ख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः।**
**सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदस्सिद्धिसाधनः॥**

भा०-॥ असङ्ख्येय इति। न विद्यन्ते सङ्ख्येया गुणा यस्यासावसङ्ख्येयः ॥ अप्रमेयात्मा अप्रमेया आत्मानः स्वरूपदेहाः स्वभावा वा यस्यासावप्रमेयात्मा ॥ वि विशिष्टा ब्रह्मादयो यस्मात्स विशिष्टः ॥ समर्थैः सर्वैरपि कृत्वा कृत्वोत्तरत्र करणासामर्थ्येन यच्छिष्टं तत्स्वयं पूर्णं करोतीति शिष्टकृत् ॥ शुद्धत्वाच्छुचिः ॥ २५० ॥ सिद्धो भक्ताभिलषितदानेऽर्थ्यते गम्यते सिद्धश्चासावर्थश्चेति वा। सिद्धानां सिद्धिमतामर्थो धनरूपो वा। सिद्धोऽर्थः सृष्ट्यादिप्रयोजनं यस्येति वा। सिद्धोऽर्थो निवृत्तिरयोग्यानां यस्मादिति वा सिद्धार्थः ॥ सिद्धसङ्कल्पो भक्ताभिलषितवितरणविषयो यस्य सः ॥ सिद्धिं योग्यानां ददातीति वाऽयोग्यानां द्यति खण्डयतीति वा सिद्धिदः ॥ सिद्धिं मोक्षरूपं फलं साधयतीति सिद्धिसाधनः ॥ २७ ॥

**वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः।**
**वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥**

भा०=॥ वृषाहीति। वृषेण धर्मेणाह्यते व्याप्यत इति वृषाही ॥ वर्षणाद्वृषभः। वृषेण धर्मेण कृतेन भातीति वा वृषभः ॥ विष्णुः। स्नु प्रस्रवण इत्यस्मादन्येभ्योऽपि दृश्यत इति स्नुः प्रस्रवणं। विगतः स्नुर्यस्येति वा। विशेषेण स्नुर्नद्यादीनां यस्मादिति वा ॥ वृषः पुण्यं तत्साधनानि पर्वाण्य-

भावास्खादीनि यस्यासौ वृषपर्वा ॥ वृषोदेन पुण्योदकेन रमत इति वृषोदरः । वृषोदं गङ्गोदकं राति त्रिविक्रमरूपेण ब्रह्माण्डवर्तिभ्य इति वा । वर्षणाद्वृष उद्गतारत्वादुदरः । वृषश्चासावुदरश्चेति वा । वृषोदरमिव पृष्ठमुदरं यस्मासावित्यप्याहुः ॥ वर्धयति स्वीयानिति वर्धनः । वर् वृतं धनं यस्यासाविति वा ॥ २६० ॥ वर्धनं नित्यमिति वर्धमानः ॥ विविक्तो जगद्भिन्नः । श्रुतिलक्षणः सागरो यस्येति वा । श्रुतिं वेदं सनोतीति श्रुतिसो गृणातीति गरः । श्रुतिसश्चासौ गरश्चेति वा । श्रुतिसागरत्वाच्छ्रुतिसाऽगैर्गोवर्धनादिभी रमत इत्यगरः । श्रुतिसश्चासावगरश्च श्रुतिसागरः ॥ २८ ॥

**सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।**
**नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥**

भा०—॥ सुभुज इति । शोभना भुजा यस्यासौ सुभुजः । सु सुखं भोजयतीति वा ॥ धारयितुमशक्यत्वाद्दुर्धरः । वेदादिरूपवाग्विशिष्टत्वाद्वाग्मी ॥ इन्द्रः परमैश्वर्यवान् । इदं विषयजातमुद्दिश्य द्रवणात्सर्वविषयभोगाद्वा इन्द्रः । इदमभीष्टं राति ददातीति वा इन्द्रः । महांश्चासाविन्द्रश्च महेन्द्रः ॥ वसु तोये धने मणावित्युक्तेर्धनदो मणिदो वा ॥ वसुर्वासयति तत्तत्स्थानेषु जनान्वासयत्याच्छादयति स्वस्वरूपमिति वा । सर्वत्र वसतीति

वा वसुः ॥ नैकान्यनेकानि रूपाणि यस्यासौ नैकरूपः । २७० ॥ बृहद्रूपं यस्यासौ बृहद्रूपः ॥ शिपिविष्टः शिपिषु काष्ठेष्वग्न्यन्तर्यामितया स्थितत्वात् । यद्वा पशवः शिपयः प्रोक्तास्तत्राविष्टोऽन्तरात्मना । शिपिविष्टस्ततः प्रोक्तः सर्वान्तर्यामिसंज्ञयेति स्मृतेः, यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठतीति श्रुतेश्च पशुषु स्थितः । शिपिविष्टेषु चाख्यायां हीनरोचो यो भवेत् । तेनाविष्टं च यत्किञ्चित् शिपिविष्टेषु च स्मृतः । यास्को मां ऋषिरव्यग्रो नैकयज्ञेषु गीतवान् । शिपिविष्ट इति ह्यस्माद्गुह्यनामधरो ह्यहम् । स्तुत्वा मां शिपिविष्टेति यास्को ऋषिरुदारधीः । मत्प्रसादादथो नष्टं निरुक्तमभिजग्मिवानिति मोक्षधर्मेषु नारायणीये । शिपयो रश्मयो मताः । तेषु प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यत इत्युक्तेः रश्मिस्थितो वा । प्रकाशयतीति प्रकाशनः । प्रकर्षेण कं सुखमश्नातीति वा प्रकाशनः । प्रकाशं सूर्यादिप्रकाशं नयतीति वा ॥ २९ ॥

**ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।**
**ऋद्धस्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥**

भा०–॥ ओज इति । धरतीति धर ओजस्तेजोद्युतीनां पदावष्टम्भनशक्तिप्रतापप्रकाशानां धरस्तथा ॥ प्रकाशस्वरूपत्वात् प्रकाशात्मा । प्रकर्षेण कमश्नातीति प्रकाश आदेयं यातीत्यात्मा ।

प्रकाशश्चासावात्मा चेति वा ॥ प्रकर्षेण सूर्यादिषु स्थित्वा तापयतीति प्रतापनः । प्रकर्षेण ततत्वात्प्रतः अपां समूह आपं तं नयतीत्यपनः । प्रतश्चासावपनश्चेति वा प्रतापनः ॥ ऋद्धो-ऽभिवृद्धः स्पष्टाक्षरः स्पष्टानि वेदशास्त्रगतान्यक्षराणि प्रतिपादकानि यस्यासौ तथोक्तः । ऋद्धस्पष्टाक्षर इति पाठे अष्ट ओं नमो नारायणायेत्येतान्यक्षराणि यस्यासावित्यर्थः ॥ मानात्त्रायत इति मन्त्रः । मानात्त्रातीति मन्त्रोऽयमिति गीतातात्पर्योक्तेर्मनन-कर्तृत्वाद्वा मन्त्रः ॥ चन्द्रस्य अंशवो यस्मात्स चन्द्रांशुः । तापार्तानां चन्द्रांशुरिवाह्लादकत्वाद्वा ॥ २८० ॥ भास्करस्य द्युतिर्यस्मात्स भास्करद्युतिः ॥ ३० ॥

**अमृतांशूद्भवो भानुः शशबिन्दुस्सुरेश्वरः ।**
**औषधं जगतस्सेतुः सत्यधर्मपराक्रमः ॥**

भा०–॥ **अमृतांशूद्भव** इति । अमृतांशूद्भवोऽमृताया अंशवो यस्य धन्वन्तर्यादिरूपस्य सोऽमृतांशुः । उद्गतो भवात् संसारादुत्पत्तेर्वा उत् उत्कृष्टो भवो रुद्र इन्द्रियादिभ्यो येनेति वोद्भवः । अमृतांशुश्चासावुद्भवश्च । अमृतांशोश्चन्द्रस्योद्भवो यस्मादिति वा ॥ भातीति भानुः ॥ शशबिन्दुः । ज्ञानज्ञानः सुखसुख इति श्रुतेः अत्यन्तसुखात्मकत्वाच्छशः । वबयो-रभेदात् बिन्दुर्ज्ञानी शशश्चासौ बिन्दुश्चेति तथा । मृगयायां

शशस्य बिन्दुर्यस्येति वा ॥ सुरेश्वरः सुष्ठु राजत इति सुरः। अश्नुते जगदीश्वरः। सुरश्चासावीश्वरश्च सुराणामीश्वर इति वा ॥ उष्टानां निधिरौषधमिति गीतातात्पर्योक्तेः, उष्टानां तापत्रय-दग्धानामाश्रयत्वादौषधम् ॥ नोक्तपूर्वं मया क्षुद्रमलीकं वा कदाचन। ऋता ब्रह्मसुता सा मे सत्या देवी सरस्वती। सच्चासच्च कौन्तेय मयावेशित आत्मनि। पौष्करे ब्रह्मसदने सत्यं मामृषयो विदुरिति मोक्षधर्मोक्तेः सत्यवचनाद्वा मूर्ता-मूर्तजगदाश्रयत्वाद्वा सत्यः। धारकत्वाद्धर्मः। पराक् रमत इति पराक्रमः। सत्यश्चासौ धर्मश्चासौ पराक्रमश्चेति तथा। सत्या धर्मपराक्रमा यस्येति वा ॥ ३१ ॥

**भूतभव्यभवन्नाथः पवनः पावनोऽनलः।**
**कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥**

भा०-॥ भूतभव्येति। भुवि ऊता भूता भवः संसारो येषामस्तीति भविनोऽभा ज्ञानशून्या वनो भक्ताः। वन सम्भक्तावित्यतः क्विप्। भूतभव्यभवनस्तेषां नाथस्तैर्नाथ्यत इति वा भूतभव्यभवन्नाथः ॥ पान्तीति पा राजानस्तान्वनति भाग्यदानेनेति पवनः ॥ २९० ॥ पावयति शोधयतीति पावनः। यद्वा पा राजानस्तेभ्योऽवनं यस्मात् पावनः ॥ न विद्यतेऽलं वारणं यस्यासावनलः। अनं मुख्यप्राणं लाति भक्तत्वेनेत्यनलः।

बला जगत्सृष्ट्यादौ पर्याप्तिविषयिणी भूतबुद्धिर्न विद्यते यस्य सोऽनलः ॥ कामं हन्तीति कामहा ॥ कुत्सितोऽमो रोगः कामस्तं हन्तीति कामहा । कामं भक्ताभिलषितं करोतीति कामकृत् । कस्य ब्रह्मादिसुखस्वरूपस्यान्तो निर्णयो यस्मादिति कान्तः । दैत्यानां कस्य सुखस्यान्तो नाशो यस्मादिति वा कान्तः । के समुद्रोदकेऽन्तति बध्नातीति वा कान्तः ॥ काम्यते जनैरिति कामः । केन चतुर्मुखेनाम्यते गम्यत इति कामः । केन वायुनाऽम्यते गम्यत इति कामः । स एनान्गमयतीति श्रुतेः । विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरः । कुतोऽन्यस्य भवेच्छक्ति-स्तमृते प्राणनायकमिति स्मृतेश्च ॥ कामं काम्यं प्रददातीति कामप्रदः ॥ प्रकर्षेण भवतीति प्रभुः । ३२ ॥

## युगादिकृद्युगावर्तो नैकमायो महाशनः ।
## अदृश्योऽव्यक्तरूपश्च सहस्रजिदनन्तजित् ॥

भा०—॥ युगादिकृदिति । युगादिकृद्युगादिकालभेदं करोतीति तथा । युगानि कृतादीन्यावर्तयतीति युगावर्तः । ३००॥ नैकमायोऽनेकेच्छः ॥ महदशनं यस्येति महाशनः । महत्याशा-ऽन्नाशा यस्यासौ महाशो दूर्वासस्तं प्रति नयत्यन्नमिति महाशनः । मदुद्देशेन यागो भवत्विति महे यज्ञविषये आशा यस्यासौ महाशस्तं नयतीति वा । दृश्यो न भवतीत्यदृश्यः ।

तदव्यक्तमाह हीत्युक्तेः ।। अव्यक्तं रूपं यस्यासावव्यक्तरूपः ।। सहस्रमसुराणां जयतीति सहस्रजित् ।। अनन्तानि वस्तूनि जयति लभत इत्यनन्तजित् ।। ३३ ।।

**इष्टो विशिष्टश्शिष्टेष्टः शिखण्डी नहुषो वृषः ।**
**क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥**

भा०--।। इष्ट इति । यज्ञेन पूजितत्वादिष्टः । प्रियत्वादिष्टः ।। विशेषेण शिष्टा यस्मादिति वा, विशेषेण प्रलयेऽत्रशिष्ट इति वा विशिष्टः । शिष्टेष्टः शिष्टैरिष्टः पूजितः, शिष्टा प्रलयकालेऽवशिष्टा रमा यस्यासौ ।। शिखण्डी बाल्ये कृष्णरूपेण चूडाधारी बर्हधारी वा ।। शिनः सुखिनः खण्डयतीति वा शिखण्डी ।। ३१० ।। नहुषो दैत्यानां बन्धकः । नहू बन्धन इति धातुः ।। भक्तेष्टवर्षणाद्वृषः ।। क्रोधस्वरूपान्दैत्यान्हन्तीति क्रोधहा । क्षमानिधित्वात्क्रोधं हन्तीति वा ।। असाधुषु क्रोधं करोतीति क्रोधकृत् । क्रोधं कृणोतीति वा । कृ हिंसायाम् ।। कर्ता स्वतन्त्रः । विश्वस्य वायोः कारणीभूतबाहू यस्य स विश्वबाहुः । सोऽहं वायुं दिशां दत्तमित्यादिश्रुतेः ।। धरतीति धरो मह्या धरो महीधरः ।। ३४ ।।

**अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।**
**अपां निधिरनुष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ३५ ॥**

भा०-॥ अच्युत इति । अच्युतश्च्युतिरहितः ॥ प्रथितः प्रसिद्धः ॥ प्रकृष्टान् आ सम्यङ्नयति स्वलोकमिति प्राणः । आणा सरस्वती तस्याः प्रकृष्ट इति वा ॥ ३२० ॥ प्राणान्ददातीति प्राणदः ॥ वसोरपत्यमिति वा, वसूनि रत्नान्यस्य सन्तीति वा, दैत्यानां वासं वाति नाशयतीति वा वासव इन्द्रस्तस्यानुजो वासवानुजः ॥ अपां निधिः । आपो वै सर्वा देवता इति श्रुतेः, अपां देवानां निधिराश्रयः ॥ अधितिष्ठत्यत्रेत्यधिष्ठानम् ॥ प्रकर्षेण मत्तो न भवतीत्यप्रमत्तः ॥ प्रतिष्ठितः प्रतिष्ठाऽस्य सञ्जातेति तथा ॥ ३५ ॥

स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥ ३६ ॥

भा०-॥ स्कन्द इति । स्कन्दनात्स्कन्दः ॥ स्कन्दधरः षण्मुखधरः ॥ धुरं वहतीति धुर्यः ॥ वरदो मोक्षदः । रुद्रादिदत्तवरान्द्यति खण्डयतीति वरदः । न विद्यते वरो धवो येषां तेऽवराः शूर्पणखादिरक्षोदारास्तान्द्यति नासिकाछेदादिना खण्डयतीति वा । हिंसार्थादवतेरचि अवा दैत्यहिंसका रदा यस्येति अवरद इत्यपि वदन्ति ॥ ३३० ॥ वायुवाहनो वायुं श्वासवायुं वहन्तीति वायुवाहा जीवास्तान्नयतीति तथा । वायुर्वाहनं यस्येति वा ॥ वासुदेवो वसुदेवस्यापत्यम् । अर्थान्त-

राणि तु कर्मनिर्णयोदाहृतवचनाद्वानात्सूतेर्देवनाद्वासुदेवो वासाद् द्युतेश्छादनात्क्रीडया च बलादसुत्वाद्दातृतो वर्तनाच्च तं वासुदेवं प्रवदन्ति वेदा इति श्रुतेः । स्पष्टं तदर्थस्तु कर्मनिर्णय-टीकायामुक्तः । तथा हि — वानाज्ज्ञानात् वातेर्विच् । सूतेरुत्पादनात् सूतेर्डुः । देवनात्क्रीडादेः दीव्यतेरच् । वाश्चासौ सुश्चासौ देवश्चेति विग्रहः । वासात्सर्वत्र वासकर्तृत्वात्सर्ववासाधि-करणत्वाद्वा । वस निवास इत्यस्मादुण् । द्युतेर्देवो वासुश्चासौ देवश्चेति द्वितीयार्थः । छादनात्सर्वव्यापनादविद्यादिनाऽनावर-णाद्वा । वस आच्छादन इत्यस्मादुण् । क्रीडया देवः पूर्वव-द्विग्रह इति तृतीयः । बलाद्वः असुत्वात्प्राणरूपत्वादसुः दातृतो दातृत्वात् । ददातेरेकारः कृन्मेजन्त इत्यव्ययत्वम् । वर्तना-त्सर्वत्र वः । वृतु वर्तने अवोडः । वश्चासावसुश्चासौ देवश्चेति विग्रह इति चतुर्थ इति वा ॥ बृहन्तो भानवो यस्य स बृहद्भानुः ॥ आदिदेवः कारणीभूतदेवः ॥ पुरं दारयतीति पुरन्दरः ॥ ३६ ॥

**अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।**
**अनुकूलश्शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ३७ ॥**

भा०—॥ अशोक इति । न विद्यते शोको यस्य सोऽशोकः ॥ तारयतीति तारणः । तारेण प्रच्छावेन णः सुखं

यस्मात्स इति वा । तरणेरयं तारणः सूर्यमण्डलान्तर्गतत्वा-त्सूर्यवंशोद्भवत्वाद्वा ॥ तारस्तारकः ॥ शुवति सङ्ग्राममिति वा शूयतेऽसौ भयार्तैरिति वा । ऊरीकृतसुखो वा । शूरस्य गोत्रापत्यं शौरिः ॥ ३४० ॥ जनानामीश्वरो जनेश्वरः । न जायत इति जनोऽस्य स्त्री ई । या ईश्वरः ईश्वरो जनश्चासा-वीश्वरश्चेति वा ॥ अनुकूलो भक्तहितकरो गङ्गादिकूलमनु-सृत्य विद्यमानो वा । जलाशयं समारभ्य यावद्धस्तचतुष्टयम् । तावन्नारायणक्षेत्रं तत्र सन्निहितो हरिरिति स्मृतेः ॥ शतममृत-पानयोग्यदेवतागणम् । आ समन्तात्तत्त्वदेवतादिरूपेण प्रवर्तय-तीति शतावर्तः । शतमावर्तास्तदुपलक्षितजलव्यापारा यस्मादिति वा ॥ पद्ममस्यास्तीति पद्मी । पद्मो ब्रह्मा पुत्रत्वेनास्तीति वा । पद्मनिभे ईक्षणे यस्य स पद्मनिभेक्षणः । पद्मानि सुहृत्त्वेनास्य सन्तीति पद्मः सूर्यः । अर्श आद्यच् । नितरां भा यस्य सः निभश्चन्द्रस्तावीक्षणे यस्येति वा । भास्वच्चन्द्रमसौ मदीयनयन इति स्मृतेः ॥ ३७ ॥

**पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।**
**महर्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥**

भा०-॥ पद्मनाभ इति । पद्मानि नयतीति पद्मनः सूर्यस्तस्याभेवाभा यस्य स पद्मनाभः ॥ अरा विन्दतीत्यरविन्दं

तदिवाक्षिणी यस्य सोऽरविन्दाक्षः । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् । रविन्दमन्धकारस्तन्न भवतीत्यरविन्दः प्रकाशो ज्ञानमिति यावत् । तदात्मकान्यक्षीणि यस्येति वा । अन्धकारो रविन्दान्धतिमिरं तम उच्यत इत्युत्पलमालोक्तेः ॥ पद्मं गर्भे यस्य सः पद्मगर्भः । पद्मश्चतुर्मुखो गर्भोऽन्नं यस्य स इति वा । भ गर्भो ष नरकेऽन्नेऽग्नावित्यभिधानम् ॥ शीर्यते नित्यमेवेति स्मृतेः शरीरं जगत् तद्बिभर्तीति शरीरभृत् । शरी अमोघशरी ईरः प्रेरको भृत् धारकश्चेति शरीरभृदिति वदन्ति ॥ महती ऋद्धि-र्यस्येति वा । महैर्यज्ञाद्युत्सवैर्ऋद्धिर्यस्येति वा । महे बलिकृत-यज्ञोत्सवे त्रिविक्रमरूपेणाभिवृद्धिर्यस्येति वा महर्धिः ॥ ३५० ॥ ऋद्धो ज्ञानानन्दादिगुणैरभिवृद्धः ॥ वृद्धात्मा वृद्ध आत्मा देहो यस्य सः । वृद्धानां गुणवृद्धानां ब्रह्मादीनामात्माऽन्तर्यामीति वा ॥ महाक्षो महत्यौ अक्षिणी यस्य सः । महान्त्यक्षाणि वा यस्येति महाक्षः ॥ गरुडध्वजो गरुद्भिर्डीयत इति गरुडः । डीङ् विहायसा गतौ । अन्येभ्योऽपीति डः । पृषोदरादित्वात्त-लोपः । सर्पान् गिलतीति वा गरुडो वैनतेयो ध्वजो यस्य स गरुडध्वजः ॥ ३८ ॥

**अतुलश्शरभो भीमस्समयज्ञो हविर्हरिः ।**
**सर्वलक्षणलक्षण्यो लक्ष्मीवान्समितिञ्जयः ॥**

भा०- ॥ अतुल इति । अतुलो न विद्यते तुला यस्येत्यतुलः ॥ शरभः शरे प्रलयोदके भातीति शरभः । शरे त्रिपुरघ्नशरे भातीत्यपि वदन्ति ॥ भीमो भृता माः प्रमाणानि येन व्यासादिरूपेणेति भीमः । बिभेत्यस्माज्जन इति वा । भियं भक्तभयं मिनाति हिनस्तीति वा भीमः ॥ समयज्ञो मया रमया सहितः समो यदस्ति तज्जानातीति यज्ञः । समश्चासौ यज्ञश्चेति समयज्ञः । सं सम्यगयं भक्तशुभावहविधिं जानातीति समयज्ञः । समयं भक्ताभीष्टदानकालं जानातीति वा । समयान् शास्त्राणि जानातीति वा ॥ हविर्हरिः हवींषि हरतीति तथा ॥ सर्वलक्षण-लक्षण्यः सर्वाणि लक्षणानि यानि जगज्जन्मादिकारणत्वादीनि तैर्लक्षण्यो लक्षितुं योग्यो लक्षण्यः सर्वेषां लक्षणानि चिन्हानि यस्यासौ सर्वलक्षणः । सर्वकर्मा सर्वलिङ्ग इति श्रुतेः । लक्षणे साधुरिति लक्षण्यः सर्वलक्षणश्चासौ लक्षण्यश्चेति वा सर्वलक्षण लक्षण्यः । लक्ष्मीवान् लक्षयति पश्यति भक्तानिति लक्ष्मीः । लक्ष दर्शनाङ्कनयोर्लक्षे मुट् चेति ईप्रत्ययस्तस्य च मुडागमः । लक्ष्मी रमा संपत्तिः शोभा वाऽस्यास्तीति ॥ ३६० ॥ समितिञ्जयः समितिं युद्धं जयतीति समितिञ्जयः ॥ ३९ ॥

विक्षरो रोहितो मार्गो हेतुर्दामोदरस्सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ ४० ॥

भा०-॥ विक्षर इति। विक्षरो विगतः क्षरो नाशो यस्यासौ। विशेषेण क्षरो भक्ताभिलषितदानं यस्येति वा॥ रोहितो लोहितवर्णः॥ मार्गो मृगयन्ति शास्त्रादिना विचारयन्तीति मृगा ज्ञानिनस्तेषामयं मार्गः। मारयति लिङ्गशरीरं गमयत्यपवर्गमित्यप्याहुः॥ हेतुर्जगत्कारणम्॥ दामोदरो दम्यन्तेऽस्मिन्निति दमः प्रलयः। दमस्येदं दामं लयादिकं तच्च तदुदं च दामोदं तस्मिन्रमते दामोदरः। अथवा दम इन्द्रियनिग्रहः। दमस्येमेऽधिकत्वेन दामा मुनयस्तेषामुदेनोदकेन रमत इति दामोदरः। ददातीति दा दानशीलास्तेभ्य आमोदं राति ददातीति वा दामोदरः। द्यति खण्डयतीति दा दैत्यास्तेभ्योऽमोदं दुःखं राति ददातीति वा। दाम उदरे यस्येति वा। उद् उत्कृष्टः अः नारायणो येषां त उदा जीवाः। अ इत्युक्तः परो विष्णुर्येभ्य उच्चः स एव तत्। त उदा जीवसञ्ज्ञाः स्युरिति तैत्तिरीयभाष्योदाहृतप्रमाणाद्दामा दमयुक्ताश्च त उदाश्च दामोदा दामोदेषु रमत इति दामोदरः। सर्वं सहत इति सहः॥ धरतीति धरो मह्या धरो महीधरः। महीं गिरिरूपेण धत्त इति व्याख्यानं तु कर्मण्यणि प्राप्ते महीधाररूपापत्त्या भगवतो जडगिरिरूपत्वानुपपत्त्या चोपेक्ष्यम्। भगा ऐश्वर्यादिषड्गुणास्तेषामाधारत्वेनायं भागो महांश्चासौ भागश्चेति महाभागः। महेषु यज्ञेषु आ सम्यग्भागो यस्येति वा। महती भा यस्य स महाभः। महाभोऽगो गोवर्धनो मन्दरो वा यस्येति

वा ॥ गजेन्द्रादिभक्तरक्षणे वेगोऽस्यास्तीति वेगवान् ॥ ३७० ॥ मितमश्नातीति मिताशनः स न भवतीत्यमिताशनः । अमितमश्नातीति वा ॥ ४० ॥

## उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
## करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ४१ ॥

भा०-॥ उद्भव इति । उद्गतो भवो यस्मादुद्भवः । उत्कृष्टः पार्वत्यादिभ्यो भवो येनेति वा । उद्गतो भवात् संसारादिति वा ॥ प्रकृतिपुरुषक्षोभकत्वात्क्षोभणः ॥ क्रीडादिकर्तृत्वात्स्तुत्यत्वाद्गम्यत्वाच्च देवः । दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । क्रीडाद्यर्थात्कर्तरि पचाद्यच् स्तुत्यर्थाद्गत्यर्थाच्च कर्मणि घञ् । तदुक्तमृग्भाष्ये - द्योतनाद्विजयात्कान्त्या स्तुत्या व्यवहृतेरपि । गत्या रत्या च देवाख्यमिति । श्रियो गर्भो यस्मादिति श्रीगर्भः ॥ परमश्चासावीश्वरश्च परमेश्वरः । पातीति पः पश्चासौ रमेश्वरश्चेति वा ॥ करेण सुखं बलं वा यस्य तत्करणम् । णो बलं णश्च निर्वृतिवाचक इत्युक्तेः ॥ कार्यते जगदनेनेति कारणम् । कं जलमरणमाश्रयो यस्येति वा । कयोर्वायुब्रह्मणोररणमिति वा ॥ करोति सर्वमिति कर्ता । बन्धछेत्ता वा, कृती छेदन इति धातोः ॥ विविधं करोतीति वा विकर्ता । विगतः कर्ता यस्येति वा ।

समासविधेरनित्यत्वान्नद्धनश्चेति कबभावः ॥ ३८० ॥ ज्ञातुमशक्यत्वाद्गहनः ॥ गूह। आवृणोति स्वरूपमिति गुहः । ४१ ॥

**व्यवसायो व्यवस्थानः संस्थानस्स्थानदो ध्रुवः ।**
**परर्धिः परमस्पष्टस्तुष्टः पुष्टश्शुभेक्षणः ॥ ४२ ॥**

भा०-॥ व्यवसाय इति । व्यवसायो निश्चयः तद्वान् तद्रूपो वा ॥ विविधा अवस्था जाग्रत्स्वप्नसुषुप्त्याद्या नयतीति व्यवस्थानः । नयतेर्डः । दैत्यान्प्रति विरुद्धतयाऽवस्थानं यस्येति वा । देवान्प्रति स्थानमवस्थानं यस्येति वा ॥ संस्थानः सम्यक् तिष्ठन्तीति संस्था अनस्येमे आनाः संस्था आना यस्मात्स इति वा संस्थानः ॥ भक्तेभ्यो वैकुण्ठादिस्थानं ददातीति स्थानदः । अयोग्यानां स्थानं द्यति खण्डयतीति वा ॥ परेषां वृद्धिर्यस्मात्स परर्द्धिः । परमस्पष्टः परमश्चासावस्पष्टश्चेति वा । परमेण स्वेनैव स्पष्ट इति वा ॥ भक्तकृतसेवया तुष्यतीति तुष्टः ॥ पुष्णातीति पुष्टः ॥ ३९० ॥ शुभे ईक्षणे यस्य स शुभेक्षणः । शुभमीक्षणमस्य कर्तुः कर्मणो वेति वा ॥ ४२ ॥

**रामो विरामो विरजो मार्गो नेयो नयोऽनयः ।**
**वीरश्शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥**

भा०- ॥ राम इति । रमायाः पतिरयं रामः । रमन्ते-

ऽस्मिन्योगिन इति वा । रमत इति रः न विद्यते मा मतिर्यस्यासावमः । रश्चासावमश्चेति वा । रमयतीति वा । आनन्दरूपत्वात्पूर्णत्वाल्लोकरमणाच्च रामः । आनन्दरूपो निष्परिमाण एष लोकश्चैतस्माद्रमते तेन राम इति शाण्डिल्यशाखायामिति गीताभाष्योक्तेः ॥ विशिष्टा रामा रमा यस्य स विरामः । विविधा रामा गोपिकादिस्त्रियो यस्येति वा । विरामयति प्रलये जनानिति वा ॥ विगतं रजस्तदुपलक्षितगुणत्रयं यस्मात्तद्ब्रह्म विरजो विगतो रजोदोषो यस्मात्स इति वा । विरजानदीति प्रयोगात् । रजं तु रजसा सहेति कोशाद्विरजो ब्रह्मलोक इति श्रुतेश्चाकारान्तोऽपि रजशब्दोऽस्ति ॥ मृगस्येदं मार्गं सिंहमुखं तदस्यास्तीति मार्गः । अर्शआद्यच् ॥ शिष्येषूपदेशेन नेतुं योग्यो नेयः ॥ नयतीति स्वस्यैवोत्तमत्वादन्यस्मिन्न विद्यते नयो यस्य सः । अनं वायुं भुवं प्रापयतीति प्राश्वः ॥ वीं ज्ञानं वी गतिव्याप्तिप्रजनकान्त्यसनखादनेष्विति धातुव्याख्यानात्तेन रमत इति वीरः । विक्रान्तो वा अजतीति वीरः । अज गतिक्षेपणयोस्तस्माद्रक् तस्य वीत्यादेशः ॥ शक्तिशब्दादतिशायने मतुप् षष्ठ्या अलुक् । शक्तिमतां श्रेष्ठः ॥ ४०० ॥ धारकत्वाद्धर्मः । प्राप्यतया धर्मवत्त्वाद्वा ॥ धर्मं वेत्तीति धर्मवित् तदुत्तमत्वाद्धर्मविदुत्तमो धर्मास्तद्वन्तो विदुत्तमा यस्मात्स इति वा ॥ ४३ ॥

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भश्शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥४४॥

भा० -॥ वैकुण्ठ इति । विकुण्ठाया अपत्यं वैकुण्ठो वैकुण्ठलोकस्थत्वाद्वा ॥ सर्वेभ्यः पुरा सदनात्सर्वदोषसादनाद्वा पुरुषः । पुरि शयनाद्वा । सर्वासु पूर्षु पुरिशय इति श्रुतेः । पुरुसंज्ञे शरीरेऽस्मिन्, शयनात्पुरुषो हरिः । शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते । भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तते वासुदेवे सनातन इति स्मृतेश्च । पूर्णत्वात् पालकत्वात्पुरुष इति वा । पृ पालनपूरणयोरित्यतो विदिपुरोश्चेति कुषन् ॥ आणा येषां ते मुक्तास्तेभ्यः प्रकृष्ट इति प्राणः प्रकृष्टे नाम्नि चेष्टत इति वा ॥ णः सुखं तद्विरुद्धत्वादणः शोकः प्रकर्षेण तं द्यति खण्डयतीति प्राणदः । छान्दोग्यभाष्ये तु, प्रकृष्टानां च नायकः प्राणनामा ण इत्येव ह्यानन्दः समुदीरितः । आणा सरस्वती प्रोक्ता तत्प्रकृष्टसुखत्वतः । प्राण इत्युच्यते वायुरित्युक्तेर्गुरुत्वेन भक्तानां प्राणं ददातीति वा ॥ प्रकर्षेण नयत इति प्रणवः । णु स्तुताविति धातोः कर्मण्यच् । आत्मानं प्रणोतीति प्रणवः । तदुक्तं गीतातात्पर्ये । वेदस्थः प्रणवाख्योऽसावात्मानं प्रणवो ह्यत इति । प्रकर्षेण नूतनत्वाद्वा । प्रणमन्तीह यं वेदास्तस्मात्प्रणव उच्यत इति सनत्कुमारवचनात् प्रकर्षेण नम्यत्वात्प्रणव इत्यप्याहुः ॥ प्रथ प्रख्यान इति धातोः

अख्यातत्वात्पृथुः ॥ हिरण्यं तदात्मकं ब्रह्माण्डं गर्भे यस्य स हिरण्यगर्भः । शत्रून्हन्तीति शत्रुघ्नः ॥ ४१० ॥ विशिष्टत्वाद्देवादयो ब्रह्मादयस्तेषामाप्तः । विं गरुडमाप्तो व्याप्तः ॥ वशब्दो बलवाची बलरूपत्वाद्वः । गमनकर्तृत्वादायुः । वश्चासावायुश्चेति वायुः । वाति गच्छत्यायुश्च प्राणधारणहेतुत्वाद्वायुः । गत्यर्थानां ज्ञानार्थत्वाद्वाति जानातीति वायुः । अथवा वृणोतेः कर्तरि कर्मणि वा वृणोति व्रियत इति वायुः । यद्वा वान्ति गच्छन्ति प्रवर्तन्तेऽस्मिन्निति वायुः । वयः श्रेष्ठत्व इत्यत उणि श्रेष्ठत्वाद्वायुः । अथवा वय बन्धन इत्यस्माद्धातोर्बन्धकत्वाद्वायुः । संसाराद्व्ययते विनश्यत्यनेनेति वायुः । तदुक्तमृग्भाष्ये । बलत्वादयनाच्चैव वायुरित्यभिधीयते । वात्यायुरिति वा ज्ञानाद्वरणादाश्रयत्वतः । वय बन्धन इत्यस्मात्संसारादेर्व्ययादपि । वेत्त्यस्मिन्निति वा वायुर्वयः श्रेष्ठत्व इत्यपीति ॥ अधोऽक्षोऽक्षकुमारो यस्य स अधोक्षो हनूमांस्तेन जायते व्यज्यत इति, स जातो यस्मादिति वाऽधोक्षजः । अथवाऽधोक्षा इन्द्रियनिग्रहवन्तो वसुदेवादयस्तेभ्यो जातत्वादधोक्षजः । अधःकृतप्रत्यक्षो वा ॥

**ऋतुस्सुदर्शनः कालः परमेष्ठी परिग्रहः ।**
**उग्रस्संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥**

भा०–॥ ऋतुरिति । मोक्षसाधनत्वादृतुः । ऋ गतावित्यतोऽर्तेश्च तुरिति तुप्रत्ययः । किञ्च स्वस्वरूपमर्पयति ज्ञाप-

यतीति वा क्रतुः ॥ सुदर्शनं चक्रमस्यास्तीति सुदर्शनः। अर्श आद्यच्। अथवा सुष्ठु दर्शनं यस्मात्। शोभनं दर्शनं यस्येति वा। सुष्ठु दृश्यत इति वा ॥ कालो जगतो बन्धकत्वाच्छेदकत्वाज्ज्ञानात् कालः। कल बन्धने छेदने ज्ञाने कामधेनौ। कं सुखमालयति तत्तद्योग्यतानुसारेण पर्याप्तं करोति वा। कं सुखं आ सम्यक् लाति आददातीति वा कालः। अलं भूषणपर्याप्तिवारणेष्विति धातुव्याख्यानात् आदाने ला इति च ॥ परमेष्ठी परमे हृदयाकारे तिष्ठतीति स तथा ॥ परः परमात्मा येषामस्तीति परिणो हरिभक्तास्तान्गृह्णात्यनुगृह्णातीति परिग्रहः ॥ उं रुद्रं ग्रसतीत्युग्रः। उच्चान्ब्रह्मादीन्नमयतीत्युग्र इत्यप्याहुः। उचतीत्युग्रः। उच समवाये ॥ सं सम्यक् वत्सभूतान्ब्रह्मादीन्नमयतीति संवत्सरः। वत्सेषु कृष्णरूपेण सम्यग्रमत इति वा। संवत्सामीचीन्यवत्सरः स्वामिपुष्करिण्यादिकं स्थानं यस्येति वा। ब्रह्मविशेष्यत्वान्नपुंसकत्वम्। संवत्सरप्रवर्तकत्वादिति वा ॥ ४२० ॥ दक्षः पटुर्द्यन्ति खण्डयन्ति जनानिति दास्तेषां क्षं क्षयो यस्मादिति वा ॥ विश्रामः श्रमरहितः। श्रमाणां समूहः श्रामम्। समुदायार्थेऽण्। विगतं भक्तानां श्रामं यस्मादिति वा ॥ विश्वस्मिन्कार्ये जगत्सर्जनादौ दक्षिणः कुशल इति विश्वदक्षिणः। विश्वो वायुर्दक्षिणो यस्मादिति वा ॥ ४५ ॥

**विस्तारस्स्थावरस्स्थाणुः प्रमाणं बीजमव्ययम् ।**
**अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥**

भा०-॥ विस्तार इति। विस्तीर्यन्ते लोका अनेनेति विस्तारः। स्थाः मर्त्यलोकादिषु स्थिताः देवा अवरा यस्मात्सः। स्थावरः स्थितिशीलत्वाद्वा। रुद्रान्तर्यामित्वात्स्थाणुः। स्थो णुरिति धातोर्णुप्रत्यये रूपं तात्स्थ्यात्ताच्छब्द्यम्। समर्थः पदविधिरित्यत्र समर्थपदाश्रितत्वात्पदविधिरुपचारेण समर्थपदेनोच्यत इति महाभाष्योक्तेः। ब्राह्मणो वै सर्वा देवता इत्यत्र दर्शनात् ॥ प्रकृष्टं मानं वेदादिप्रमाणं यस्मिन्निति प्रमाणम्। प्रकृष्टं मानं शरीरादिपरिमाणं त्रिविक्रमादिरूपेण यस्येति वा। प्रकृष्टौ माणौ सुखे यस्येति वा ॥ गत्यर्थाद्वीधातोर्विचि वीर्ज्ञानं जायतेऽस्माद्व्यासादिरूपादिति बीजम्। व्यञ्जनाच्चैव बीज इत्युच्यते प्रभुरिति गीतातात्पर्योक्तेर्व्यञ्जकं वा ॥ अवगमार्थादवतेर्भावेऽचि अवो ज्ञानं तदेषामस्तीत्यविनस्तैरयते गम्यत इत्यव्ययम्। विगतोऽयो यस्मात्तद्व्ययं तन्न भवतीति वा ॥ अर्थ्यते ज्ञायते भक्तैरित्यर्थः। अरं थमन्नं यस्येति वा। निर्वचनाद्रेफो नाकारलोपः। भक्तैरर्थ्यत इति वा ॥ ४३० ॥ अनो मुख्यप्राणो यस्येत्यनर्थः। अनतेर्विच्। अना मुख्यप्राणेनार्थ्यत इति वा। अयोग्यानामनर्थप्रदातृत्वाद्वाऽनर्थः ॥

महत् कं यस्याः सा महाका रमा उश्यते काम्यत इति महाकोशः। कस्य ब्रह्मण उत्कृष्टं शं यस्मात्सः। महांश्चासौ कोशश्चेति वा॥ पूर्णानन्दत्वान्महाभोगः॥ महद्धनं यस्य स महाधनः। महात्पूजादिलक्षणादुत्सवादाधनं यस्मादिति वा॥

**अनिर्विण्णस्स्थविष्ठोऽभूर्धर्मयूपो महामखः।**
**नक्षत्रनेमिर्नक्षत्री क्षमः क्षामस्समीहनः॥**

भा०—॥ अनिर्विण्ण इति। ग्लानिशङ्कारहितत्वादनिर्विण्णः। निर्वेदो ग्लानिशङ्कयोरित्यभिधानम्। निष्क्रान्तो विण्णाभ्यां ज्ञानसुखाभ्यां निर्विण्णः स न भवतीत्यनिर्विण्ण इति वा॥ स्थविष्ठः स्थूलतमः॥ न विद्यते भूराधारो यस्येत्यभूर्निराधारः। भवतेर्भावे क्विपि न विद्यते भवनं यस्येति वा। अथवा भूरिति पदच्छेदः। पूर्णत्वाद्भूः। भू बहौ। बहुः पूर्णतायामित्युक्तेर्भवतेः क्विप्। भावयतीति भूः। सर्वोत्पादक इति वा। सर्वाश्रयत्वादिति वा॥ धारकत्वाद्धर्मो युवन्ति बध्नन्त्यस्मिन्मनो भक्ता इति यूपः। धर्मश्चासौ यूपश्चेति। धर्मसाधनं यूपः स्तम्भविशेषो यस्मादिति वा॥ महान्तो मखा यद्विषये स महामखः। न विद्यते मा मितिर्यस्य तदमं अमं खं यस्येत्यमखः। महांश्चासावमखश्चेति वा॥ शिशुमाररूपेण ज्योतिश्चक्राधारत्वान्नक्षत्रनेमिः। क्षत्रभिन्नाः क्षत्रसदृशा ब्राह्मणा

नक्षत्रास्तेषां नेमिरिवाधार इति वा ॥ ४४० ॥ परशुरामरूपेण क्षत्रहन्तृत्वात्क्षत्री स न भवतीति नक्षत्री नियामकतया नक्षत्रवत्त्वादिति वा ॥ क्षं नाशं मिनाति नाशयतीति क्षमः ॥ क्षा नरकास्तान्मवते बध्नातीति । मव बन्धन इत्यतो डः । सर्वकार्यदक्षो वा ॥ क्षमाया अयं धारको वराहादिरूपेणेति क्षामः । वामनरूपेण क्षमाप्रतिग्रहीता वा ॥ समानि रूपाणि सर्वत्रास्येति समी ईहते चेष्टत इति ईहनः समी चासावीहनश्चेति समीहनः । समीचीना ईहा भगवत्पूजादिरूपा येषां ते समीहास्तान्नयति वैकुण्ठादिकमिति वा ॥ ४७ ॥

**यज्ञ ईज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः ।**
**सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥**

भा०—॥ यज्ञ इति । यज्ञभोक्तृत्वाद्यज्ञः ॥ ब्राह्मे मुहूर्ते चोत्थाय वार्युपस्पृश्य माधवः । दध्यौ प्रसन्नकरमात्मानं तमसः परमिति भागवतोक्तेः, कृष्णरूपेण स्वात्मानं यजत इति वा । रामरूपेणाहल्यां गौतमेन संयोजयतीति वा । यज देवपूजासङ्गतिकरणदानेष्विति धातोः । ईज्यो यजनीयः । ईज्या पूजा साऽस्यास्तीतीज्यः । अर्शआद्यच् । एवं च न क्लेशलेशोऽपि ॥ महेषूत्सवेषु यज्ञादिष्वीज्या पूजा यस्यासौ महेज्यः । महे सीताविवाहोत्सवे सीताप्राप्त्यै ज्या यस्येति वा । ई श्रीश्च

ज्या भूमिश्चेज्ये महत्यौ ईज्ये श्रीभूमी यस्यासौ तथा श्रीभूमि-सहित इति वा ॥ करोति सृष्ट्यादिकमिति क्रतुः । कृतिरूपत्वाद्वा क्रतुः । कृतिः स्वरूपत्वादित्युक्तेः । ज्ञानरूपत्वाद्वा । स क्रतुर्ज्ञानरूपत्वादित्युक्तेः ॥ सतस्त्रायत इति सत्रम् । षद्लृ विशरणगत्यवसादनेष्विति सदेः ष्ट्रन् । सतो रमयतीति वा । निर्वचनत्वाज्ञत्वाभावः ॥ सतामवसादनयुक्तानां गतिः प्राप्यः । सतां नक्षत्राणां गतिर्गमनं यस्मादिति वा । उभयत्र षष्ठ्या अलुक् ॥ ४५० ॥ सर्वदर्शी दर्शोपलक्षितयज्ञविशेषा अस्य सन्तीति सर्वदर्शी । सर्वं पश्यतीति वा ॥ विमुक्ता आत्मानो जीवा येनेति विमुक्तात्मा विशेषेण मुक्तानां स्वामीति वा । जानातीति ज्ञः सर्वस्य ज्ञः सर्वज्ञः । सर्वं जानातीति विग्रहस्तु न । तथात्वे सर्वज्ञाय इति स्यात्, आतो युक् चिण्-कृतोरित्युक्तेरिति केचित् । वस्तुतस्तु कर्मण्यणोऽपवादकतया आतोऽनुपसर्गे क इति कस्य विधानात्सर्वं जानातीत्येव विग्रहः । सर्वज्ञा जीवा भवन्त्यस्मादिति वा सर्वज्ञो ज्ञोऽत एवेति सूत्रात् । ज्ञानेन स्वविषयेण मुत् यस्मात्तत् ज्ञानमुत् अतिशयेन ज्ञानमुत् ज्ञानमुत्तमं । ज्ञानेन मुत् मोदो येषां ते ज्ञानमुदो देवा-स्तैस्तम्यतेऽभिकाङ्क्ष्यत इति वा । तमु अभिकाङ्क्षायामिति-धातुव्याख्यानात् । ज्ञानमुदे तम्यते यस्मादिति वा ॥ ४८ ॥

**सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।**
**मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ४९ ॥**

भा०—॥ सुव्रत इति । शोभनं व्रतं यस्मिन्विषये स सुव्रतः । शोभनं जगद्रक्षणादिकं व्रतं यस्येति वा । शोभनं मुखं यस्येति सुमुखः ॥ सूक्ष्मरूपत्वात्सूक्ष्मः । सूक्ष्मं तु तदर्हत्वादित्युक्तेः । शोभना उत्कृष्टा क्ष्मा यस्येति वा, शोभनो घोषो वेदादिरूपः पाञ्चजन्यघोषो यस्येति सुघोषः । सुखं मौक्तिकं ददातीति सुखदः । सुखमयोग्यानां द्यति खण्डयतीति वा ॥ शोभनं हृन्मनो यस्यासौ सुहृत् । शोभनं भक्तकृतकर्मफलं हरति स्वीकरोतीति वा । अनिमित्तोपकारकृद्वा ॥ ॥ ४६० ॥ मनो गोपीनां हरतीति मनोहरः । मन्यत इति मनो हरति हविरादिकामिति हरः । मनश्चासौ हरश्चेति वा । भक्तानां मनसा ह्रियत इति वा मनोहरः ॥ जितः क्रोधो येनेति वा, जिताः क्रोधरूपा दैत्या येनेति वा जितक्रोधः ॥ वीरा राजन्या बाहुभ्यां यस्येति वीरबाहुः । बाहू राजन्य इति श्रुतेः ॥ विशेषेण दाराणां गोपीनां णः सुखं यस्मात्स विदारणः । नृसिंहरूपेण हिरण्यकशिपुविदारणो वा । विद्वद्भिर्ज्ञानिभिः आ सम्यक् अर्यते गम्यत इति वा । वेत्तीति वित् आ समन्ताद्रणो जरासन्धादिभिः यस्येत्यारणः, अरणेरयमग्न्यन्तर्गतरूपेणे-त्यारणः । विच्चासावारणश्चेति वा । विगतो दारको यस्येति वा ।

विदा आ सम्यक् रमयतीति वा । विदारा भार्यारहिताः सन्न्यासिनस्तेषां णः सुखं यस्मादिति वा ॥ ४९ ॥

**स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।**
**वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥**

भा०-॥ स्वापन इति । स्वापयतीति स्वापनः । स्वापं नयतीति वा । अपां समूह आपं सुष्ठ्वापं नयतीति स्वापनः ॥ स्वं धनं वशे यस्येति वा । स्वस्य वश इति वा । सुष्ठ्ववन्ति स्वात्मानं गच्छन्ति जानन्ति वा याचन्ते आलिङ्गन्ति वा प्राज्ञरूपं प्रलये प्रविशन्त्युदरमिति स्ववास्तेषां शं सुखं यस्मात्स स्ववशः ॥ व्याप्नोतीति व्यापी ॥ नैकात्माऽनेकशरीरोऽनेकस्वामी वा ॥ नैककर्मकृत् सृष्टिस्थित्याद्यनेकव्यापारकृत् ॥ वत्सैः रमते कृष्णावतार इति वा । वत्सं वत्सासुरं रेपयति नाशयति रीङ् क्षय इति धातुव्याख्यानाद्वत्सरः ॥ ४७० ॥ वत्सलो भक्तेषु दयावान् ॥ वत्सी श्रीवत्सवान् ॥ रत्नानि गर्भे यस्य स रत्नगर्भः ॥ धनेश्वरो धनस्वामी ॥ ५० ॥

**धर्मकृद्धर्मगुब्धर्मी सदसरक्षरमक्षरम् ।**
**अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥**

भा०-॥ धर्मकृदिति । धर्मं करोतीति धर्मकृत् । अभक्तकृतधर्मं कृन्ततीति वा ॥ धर्मं भीमाग्रजं पुण्यं वा

गोपयतीति धर्मगुप् । धर्मसाधनभूता गावो वेदादिरूपा यस्य स धर्मगुस्तं पातीति वा ॥ नियामकतया धर्मो यमोऽस्तीति धर्मी ॥ सीदतीति सत् । षद्लृ विशरणगत्यवसादनेष्विति धातुव्याख्यानात् । असदविशीर्णमनवसन्नं वा ॥ सततं दातृत्वात्क्षरं क्षरयति जगदिति वा । क्षर विनाशसन्ततदानयोः ॥ ४८० ॥ अक्षरेषु रमत इत्यक्षरं नाशरहितं वा । अशू व्याप्तावित्यतोऽक्षरं व्याप्तम् ॥ न विद्यते विज्ञाता यस्यासावविज्ञाता । समासान्तविधेरनित्यत्वान्नद्यृतश्चेति कबभावः ॥ सहस्रमंशवो यस्य सूर्यान्तर्गतस्य स सहस्रांशुः ॥ विशेषेण धाता धारको विगरुडो धाता यस्येति वा विधाता ॥ कृतानि पूर्णानि लक्षणानि यस्य स कृतलक्षणः । कृतं भक्तकृतं कर्म तस्यादाने । ला आदाने भावे डः । क्षण उत्सवो यस्येति वा । कृतानि पूर्णानि लक्षणान्यनन्तानि णशब्दवाच्यसुखानि यस्येति वा । अकृतानि स्वाभाविकानि लक्षणानि यस्येत्यपि वदन्ति ॥ ५१ ॥

**गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः ।**
**आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥५२॥**

भा०—॥ गभस्तीति । गभस्तयो नेमिर्यस्य स गभस्तिनेमिः ॥ सत्त्वं जीवः क्वचित्प्रोक्त इत्युक्तेः सत्त्वे जीवेऽन्तर्यामितया तिष्ठतीति सत्त्वस्थः । सत्त्वं तिष्ठत्यस्मिन्निति वा

सत्त्वेन बलेन तिष्ठतीति वा सत्त्वस्थः ॥ सिंहः श्रेष्ठः। भूतः प्रभूतो मह उत्सवो यस्य स भूतमह ई रमा श्वा वायुः श्वा वै वायुः श्वसनादिति ऋग्भाष्योक्तेः। ताभ्यां रमत इतीश्वरः। भूतमहश्चासावीश्वरश्च तथा। भूतानां प्राणिनां महेश्वर इति वा॥ भक्तैरादीयत इत्यादिः क्रीडादिगुणविशिष्टत्वाद्देव आदिश्चासौ देवश्चेत्यादिदेवः ॥ ४९० ॥ अत्तीत्यादो महांश्चासावादश्चेति महादः। ई लक्ष्मीं वर्तयतीतीवः। महादश्चासावीवश्च महादेवः॥ देवानां या रमायाः शं यस्मात्स इति देवेशः। देवानामीश इति वा॥ देवान् बिभर्तीति देवभृच्चतुर्मुखस्तस्योपदेष्टृत्वाद्देवभृद्गुरुः॥५२॥

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः।
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः॥

भा०—॥ उत्तर इति। अतिशयेनोत्कृष्ट उत्तरः। उत्कृष्टान्योग्यांस्तारयति संसारादिति वा॥ गोपतिः गोर्भूमेर्वा गवां वा वाक्यानां वा पालनात्पतिः। गोप्ता रक्षकः॥ ज्ञानेन ज्ञानिभिर्वा गम्यत्वाज्ज्ञानगम्यः॥ पुरेषु देहेषु वैकुण्ठादिषु वाऽतनं गमनं यस्य स पुरातनः प्राचीनो वा॥ शरीराणि भूतानि च बिभर्तीति शरीरभूतभृत्। प्रलये स्वशरीरे भूतानि बिभर्तीति वा। शरीरी भूतभृदिति पाठे तु शरीरमस्यातीति शरीरी भूतानि बिभर्तीति भूतभृदिति भिन्ने पदे। यद्वा शरीर-

भूतान् यस्य पृथिवी शरीरमित्याद्यन्तर्यामिब्राह्मणोक्तपृथिव्यादिशब्दवाच्यगरुडादीन् बिभर्तीति वाऽर्थः ॥ सर्वात्तृत्वाद्धोक्ता ॥ ५०० ॥ कपेर्वालिन ईं श्रियं द्रावयतीति कपीन्द्रः । आधिक्ये बिन्दुः । कं सुखं पिबन्तीति कपयो मुक्तास्तेषामिन्द्र इति वा । कपिर्हनुमानिन्द्रः समर्थो येनेति वा कपीन्द्रः ॥ भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गक इति मेदिन्युक्तेः, भूरि सुवर्णं दक्षिणा यस्यासौ भूरिदक्षिणः । बहुदक्षिणो वा बहुदाता वा बहुकुशलो वा भूरिधनाभिमानिनी दक्षिणा दक्षभागस्थिता रमा यस्येति वा । भूरयो दक्षा यजमाना यत्र भूरिदक्षी सत्रयागस्तेन सुखं यस्येति वा भूरिदक्षिणः ॥ ५३ ॥

**सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।**
**विनियोज्यः (विनयो जयः) सत्यसन्धो**
**दाशार्हः सात्वतां पतिः ॥**

भा०—॥ सोमप इति । सोमं सोमरसं पिबतीति सोमपः । उमया सहितः सोमो रुद्रस्तं पातीति वा । सोमं चन्द्रं पिबतीति वा सोमपः । अमृतं पिबतीति वा दैत्येभ्यः पातीति वाऽमृतपः ॥ उश्च मा चोमे रुद्ररमे ताभ्यां सहितः सोमः । भूतानि वै विश्व उमेति श्रुतेः सह उमैर्वर्तत इति वा ।

सौम्यत्वाद्वा। न विद्यते मा इयत्ता यस्यासावमः सारत्वात्सः सरतेर्डः। सश्चासावमश्चेति वा। प्रथमाया अलुक्। डसर्वो-प्रत्ययः। तदुक्तं ऋग्भाष्ये सोमः सौम्यत्वतो हरिः। उनामया च युक्तत्वादुमैर्युक्तत्वतोऽथ वा। अमः स इति वेति। उ क्लेशो न भवतीति सौख्यं तेन सहित इति वा। उत्कृष्टादनुभवत्वादानन्दानुभव उमस्तद्युक्तत्वाद्वा सोमः। उक्तं चैकादशतात्पर्ये आनन्दानुभवस्तूम उत्कृष्टानुभवात्स्मृत इति॥ पुरून् बहून् शत्रून् जयत्यभिभवति। पुरून्पदार्थान्गुणान्वा जयति। धनजिते स्वर्जिते सत्राजिते इति प्रयोगात् प्राप्नोतीति वा पुरुजित्॥ पुरुः पूर्णः सद्भिर्ब्रह्मादिभिस्तम्यते काङ्क्ष्यते। षद्लृ विशरणगत्य-वसादनेष्विति धातोर्भावे क्विप्। सत् अवसादनं तत्तामयति ग्लापयति वा सत्तमः। पुरुश्चासौ सत्तमश्च पुरुसत्तमः। पुरुषु ब्रह्मादिष्वन्तर्यामितया सीदतीति पुरुसदतिशयेन पुरुसत्पुरुसत्तमेति वा। पुरुर्ब्रह्मादिभ्योऽप्यधिका सत्ता देशतः कालतो विद्यमानता यस्याः सा पुरुसत्ता सा मा यस्येति॥ विप्रियमित्यादिवद्विशब्दो नञर्थः। नियोज्यो न भवतीति विनियोज्यः। विविधं जगन्नियोज्यं यस्येति वा। केचित्तु विनयो जय इति पाठ-मवलम्ब्य पादस्य नवाक्षरत्वेऽपि न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यामिति बह्वृचब्राह्मणोक्तेः। विनयति दण्डं करोतीति विनयो जयतीति जय इत्याहुः॥ सत्या सन्धा प्रतिज्ञा

ऽस्येति सत्यसन्धः सत्यं सन्धयतीति वा ॥ दाशं सुखादि-
दानम् । दाशृ दान इति धातोश्च । तदर्हतीति दाशार्हः । यद्वा
दाशार्हकुलोद्भवः । दशार्हाणां यादवप्रभेदानामयं दाशार्हो वा ।
दाशराजपुत्रीत्वाद्दाशा सत्यवती तामर्हति पुत्रत्वेनेति वा ।५१०॥
सात्परमात्मा सात्वन्तो भक्तास्तेषां पतिः पालकः । यद्वा सात्वतां
पाञ्चरात्रिकाणां श्रियादिनवमूर्तीनां पतिरादिमूर्तिः । तदुक्त-
मेकादशे भागवते । सात्वतां नवमूर्तीनामादिमूर्तिरहं पुरेति ।
तात्पर्ये च । विष्णोः श्रियो ब्रह्मणश्च वायोः सङ्कर्षणस्य च ।
सुपर्णस्य च सम्प्रोक्ताः प्रत्येकं नव मूर्तयः । पूज्याः सात्वत-
तन्त्रेषु तत्राद्या मूर्तयो हरेः । प्रधानास्ता हि सर्वासां मूर्तीनां
हरिमूर्तयः । अभेदादेव मूर्तीनामेकमूर्तिश्च सा स्मृतेति । स्वरूपतश्च
गुणतो न विशेषः कथञ्चन । विष्णोस्तु नवमूर्तीनां पूजा च
नवधेष्यत इति च । नारायणः परं ब्रह्म वासुदेवादिकास्तथा ।
नरसिंहवराहौ च परञ्ज्योतिर्हरेर्नव । इन्दिरा च रमा लक्ष्मी-
र्हिरण्या गगना तथा । रक्ता रक्ततरा भूतिर्विभूतिश्च श्रियो
नव । ब्रह्मा चतुर्मुखो धाता विधाता विधिरेव च । कर्ता
विरिञ्चो भूतेशः शतानन्दश्च ता नव । धनञ्जयमृते चैव वायोश्च
नव मूर्तयः । शेषोऽनन्तो नरश्चैव लक्ष्मणो बल एव च ।
सङ्कर्षणो नीलवासा जगद्भक्षो जलेशयः । सुपर्णो गरुडश्चैव
वैनतेयो महाशनः । नववर्णः पञ्चवर्णः पन्नगाशोऽमृताकरः ।
तथैव सर्ववेदात्मा सुपर्णो नवधा स्मृत इति ॥ ५४ ॥

**जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।**
**अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥**

भा०–॥ जीव इति । जीवयति जनानिति जीवः ॥ विनयिताया विनयवत्तायाः साक्षी द्रष्टा विनयितासाक्षी ॥ मुक्तिं ददातीति मुकुन्दः ॥ अमितो विक्रमः पराक्रमो यस्य सोऽमित-विक्रमः । साकल्येनाविज्ञातोऽमितो विना गरुडेन क्रमः पाद-विक्षेपो यस्य स विक्रमः । अमितश्चासौ विक्रमश्चेति ॥ अम्भो-निधिरिवाम्भोनिधिः । गाम्भीर्येणाम्भांसि देवाः कर्माणि वा । अं विष्णुं बिभर्तीत्यम्भो विष्णुलोको दिवः परे महरादयश्चेत्यैतरेय भाष्योक्तेः । अम्भांसि विष्णुलोकादयो वा । नितरां धीयन्ते-ऽस्मिन्निति वाऽम्भोनिधिः । देवाश्च दिव्यानि च लोकाश्च लोकिनश्चालोकाश्चालोकिनश्च विष्णावोताश्च प्रोताश्च तस्मिन्नपो मातरिश्वा दधातीत्यादिश्रुतेः । अनन्ता अपरिमिता आत्मानो देहा यस्येति वा । अन्तः अति बन्धने । न विद्यतेऽन्तो बन्धो यस्य सोऽनन्तः । अबद्धश्चासावात्मा चेति वा । अनन्ता-नामनन्तसङ्ख्याकानामबद्धानां वा मुक्तानामात्मा स्वामीति वाऽनन्तात्मा । अनन्ते शेषे आत्मा देहो यस्येति वा ॥ दधिशये हस्ते यस्य वामनकृष्णादिरूपेणेति दधिशयः । महांश्चासा-वुत्कृष्टश्चासौ दधिशयश्चेति महोदधिशयः महोदधौ शेत इति वोदधिरुत्कृष्टा अधिकाश्चतुर्मुखादयः शये इत्युदधिशयः । स्वाधीन

इति यावत् । महांश्चासावुदधिशयश्चेति वा ॥ अन्तो बन्धो येषामस्तीत्यन्ता अन्तानां जरासन्धादिभिर्बद्धानां राज्ञां कं सुखं येनेति वा । अन्तयति बन्धयति कं सामुद्रं जलं येन राम-रूपेणेति वा । अन्तयति नाशयति सर्वमित्यन्तकः ॥ ५५ ॥

**अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः।**
**आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥**

भा०-॥ अज इति । अजश्चतुर्मुखजनकः । कार्य-कारणयोरेकशब्दव्यवहृतिर्भवेदित्युक्तेः ॥ ५२० ॥ महस्य पूजादि-रूपोत्सवस्यार्हो योग्य इति महार्हः ॥ नित्यनिष्पन्नफलकत्वेन न विद्यते भाव्यं यस्येत्यभाव्यः स्वतन्त्रश्चासावभाव्यश्चेति स्वा-भाव्यः । स्वस्यामेव भा येषां ते ज्ञानानन्दादिगुणवत्तया स्वसदृशा योग्यजीवास्तेऽव्या रक्षणीया यस्येति वा । भव्यानां मङ्गलानां समूहो भाव्यं समूहार्थेऽण् । आ समन्ताद्भाव्यं यस्येत्याभाव्यः स्वश्चासावाभाव्यश्चेति वा ॥ जिता अमित्राः शत्रवो येनेति जितामित्रः ॥ स्वयं प्रमोदत इति वा प्रमोदयति जनानिति वा प्रमोदं नयतीति वा प्रमोदनः । प्रकृष्टा मा रमा ज्ञानं वा यस्येति प्रम उत्कृष्टोऽनो वायुर्यस्येत्युदनः प्रमश्चा-सावुदनश्चेति वा ॥ आनन्दस्वरूपत्वादानन्द आनन्दी वा । अर्शआद्यच् ॥ नन्दयतीति नन्दनः ॥ नन्दः समृद्धः ॥ सत्या

ज्ञानादयो धर्मा यस्येति वा । सत्यं जगद्धारयतीति सत्यधर्मा ॥ त्रयो विक्रमाः पादविक्षेपा यस्येति त्रिविक्रमः । त्रिषु लोकेषु विना गरुडेन क्रमः पादविक्षेपो यस्येति वा । त्रीन्वेदान्कालान्वा गुणान्वा लोकान्वा देवमानुषदानवान्वा चेतनाचेतनसात्मक-देहमिश्रान्वा पदविक्रम इति वा । तदुक्तमृग्भाष्ये । वेदान् कालान्गुणान् लोकान्देवमानुषदानवान् । चेतनाचेतनान्मिश्रां-स्त्रीणि पादा विचक्रम इति । अत्रेर्ऋषेर्विक्रमो दत्तादिरूपेण यस्येत्यत्रिविक्रमः ॥ ५६ ॥

**महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।**
**त्रिपदस्त्रिदशाध्यक्षो महाश्रृङ्गः कृतान्तकृत् ॥**

भा०—॥ महर्षिरिति । महांश्चासावृषिश्च महर्षिः ॥ संसारकम्पलयहेतुत्वात्कपिलः यद्वा कं सुखं पिबतीत्यानन्दानु-भवात् लात्सर्वादानाच्च कपिलः । ला आदान इति धातुः । यद्वा कं ब्रह्माणं पिं पिनाकिनं रुद्रं च लालयतीति कपिलः । महर्षिकपिलाचार्य इत्येकं नामेति संप्रदायविदः ॥ कृतं जानातीति कृतज्ञः ॥ ५३० ॥ मेदिनीपतिर्भूपतिः ॥ त्रीणि पदानि वैकुण्ठादिस्थानानि यस्य त्रिपदः । त्रीणि पदानि गायत्रीपादाः प्रतिपादका यस्येति वा । त्रिभ्यः पादेभ्यः पातीति त्रिपं ज्ञानं तद्ददातीति वा ॥ तिसृणां दशानां जन्मसत्ताविनाशरूपाणा-

ध्यक्षः । त्रीन्शादान्दशतीति वा । त्रिस्तृतीया दशा यौवनरूपा सदा येषामिति वा त्रयो वा दश चेति त्रिदशा देवाः । बहुव्रीहौ सङ्ख्येये डजबहुगणादिति डच् । तेषामध्यक्ष इति वा ॥ शृङ्गं प्राधान्यसान्वोश्चेति कोशान्महच्छृङ्गं प्राधान्यं यस्य स महाशृङ्गः महच्छृङ्गं ज्ञानं यस्येति वा । शृङ्गं ज्ञानं तद्वतश्चैव नित्यमिति ऋग्भाष्योक्तेः । मत्स्यावतारे महच्छृङ्गं यस्येति वा ॥ कृतस्य दुष्कर्मणोऽन्तं नाशं करोतीति वा । कृतस्य पौरुषेयस्यान्तं निर्णयं करोतीति वा । कृतेन कर्मणाऽन्तं बन्धं करोतीति वा । कृतान्तं ब्रह्मसूत्रादिनिर्माणेन सिद्धान्तं करोतीति वा । कृतान्तं मृत्युं कृणोतीति वा ॥ ५७ ॥

**महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।**
**गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ५८ ॥**

महावराह इति । वरान् दैत्यश्रेष्ठानाहन्तीति वराहः । रुक्मिणीस्वयंवरकाले वरत्वेनागतं शिशुपालमाहन्तीति वा । वैरैरहेयत्वाद्वा । महांश्चासौ वराहश्च महावराहः । महावरा अतिनीचाः कल्यादयस्तानाहन्ति तमसि प्रक्षेपेणेति महावराहः ॥ गां समुद्रं जलं लभत इति गोविन्दः । गां नेत्रं धृतराष्ट्रं विन्दतीति वा ॥ शोभना सेना यस्य स सुषेणः । षीङ् दान इति धातोरतिशयेन दाता वा ॥ ५४० ॥ सुवर्णमयाङ्गदवत्त्वात् कनकाङ्गदी ॥

गोप्यत्वाद्गुह्यो गुहनामकेनार्चितत्वाद्वा। गभीरो गम्भीरः। गम्लृ गतौ भा दीप्तौ आभ्यां डः। गभावस्यास्तीति गभी या लक्ष्म्या रमत इतीरः। गभी चासावीरश्चेति गभीरः। यद्वा न गच्छन्ति न जानन्तीत्यगा अज्ञानिनो दैत्यास्तेभ्यो भियं राति ददातीति वा। अगेन गोवर्धनपर्वतेन भियं वृष्टिभियं रेपयति नाशयतीति वाऽगभीरः। ज्ञातुमशक्यत्वाद्गहनः। अगान्पर्वतान्पक्षच्छेदादिना हन्तीत्यगह इन्द्रस्तं नयतीति वाऽगहनः। गुप्तोऽयोग्यान् जनान्प्रत्याच्छादितः। धरतीति धरः। चक्रगदयोर्धरश्चक्रगदाधरः। चक्रे सैन्ये तिष्ठन्तीति चक्रगा नरकासुरादयस्तान्द्यति खण्डयतीति चक्रगदः। न विद्यते धारको यस्येत्यधरः। आ सम्यग्धरतीति वा। चक्रगदश्चासावधरश्चेति वा॥ ५८॥

**वेधाः स्वाङ्गोऽजितः कृष्णो दृढःसङ्कर्षणोऽच्युतः।**
**वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः॥**

भा०-॥ वेधा इति। विशेषेण धारणपोषणकर्ता वेधाः॥ स्वरूपभूतान्यङ्गानि यस्येति वा। स्वतन्त्राण्यङ्गानि यस्येति वा। स्वयमेव सृष्टयादावङ्गं यस्येति वा॥ अजितः केनाप्यपराजितः॥ कृष्णरूपत्वात्पापमूलस्याग्निरूपत्वाद्वा कृष्णः। कृष्णः सीसादिलोकेषु कृष्णो नीले कले कलौ। शूद्रे काके पिके व्यासे

ध्वांक्षे पक्षेऽर्जुने हराविति कोशात् ॥ ५५० ॥ दृढो दार्ढ्यवान् । सङ्कर्षणोऽच्युत इत्येकं नामेति सम्प्रदायविदः । सम्यक् कर्षणात्सङ्कर्षणः ॥ अच्युतो न विद्यते च्युतं यस्य स तथा ॥ आवृणोतीति वरुणः । वरमुत्तमं जीवमुन्नयत्यूर्ध्वं नयतीति वा । वर उत्तमो णो हि निर्वृतिवाचक इत्युक्तेर्ण आनन्दो यस्येति वा । तदुक्तमृग्भाष्ये । आवृणोतीति वरणस्तमसाऽज्ञानतोऽपि वा । वरमुन्नयतीत्यस्माद्वरानन्दत्वतोऽपि वेति । व्रियते भक्तैर्वृणुते भक्तानिति वा । वाति जानातीति वः । अरुणरूपत्वादरुणो वश्चासावरुणश्चेति वरुणः । रक्तं रौग्ममिति श्रुतेः ॥ वरुणस्यायं वारुणः । वारण इति पाठे वारयति भक्तानिष्टमिति वा । वारां समूहो वारं समुद्रस्तस्य णः सुखं यस्मादिति वा । सिंहशार्दूल-नागाद्याः पुंसि श्रेष्ठार्थवाचका इत्युक्तेर्वारुणः श्रेष्ठ इति वा ॥ भक्ताभीष्टदाने कल्पवृक्षसदृशत्वात् वृक्षः । वृक्ष वरण इति धातोर्वृणोतीति वा । अव्रृक्ष इति च्छेदे छेदकरहित इत्यर्थः । ओ व्रश्चू छेदन इति धातोः । पुष्कराक्षः पङ्कजनयनः ॥ महन्मनश्चित्तं ज्ञानं वा यस्यासौ महामनाः ॥ ५९ ॥

**भगवान्भगहानन्दी वनमाली हलायुधः ।**
**आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥**

भा०—॥ भगवानिति । भगवान् अन्यो मुकुन्दात्को

नाम लोके भगवत्पदार्थ इति भागवतोक्तेः । ऐश्वर्यादि-षड्गुणः ॥ दैत्यानामैश्वर्यं हन्तीति भगहा । भारूपौ सूर्यचन्द्रौ गच्छतीति भगो राहुस्तं हन्तीति वा ॥ ५६० ॥ आनन्दोऽस्या-स्तीत्यानन्दी । नन्दीति पक्षेऽपि स एवार्थः ॥ वनमाली आपादलम्बायमानमालायुक्तः । आपादपद्मं या माला वनमालेति सा स्मृतेत्युक्तेः । वन षण सम्भक्ताविति धातोः वना सम्भजका च सा मा रमा च वनमा सा आलिः सखी च वनमालिः साऽस्यास्तीति वा । उभयत्रापि वादिनोः शून्य-मायिनोः परिस्फुरत्कुण्डलमौलिमालिनामित्यत्रेव तदन्तविधि-स्वीकारात् । व्रीह्यादित्वादिनिः । वनमुदकं भक्तं वा । मल धारण इति धातोर्णिनिप्रत्यये मलितुं धर्तुं शीलमस्यास्तीति ॥ हलमायुधं यस्य शुक्लकेशस्य स हलायुधः । रलयोरभेदात् हलस्य हरस्य रुद्रस्य त्रिपुरसंहारकाले आयुधरूपत्वाद्वा हलायुधः । आदित्य आदिनी अनादिकालमारभ्य वर्तमाने त्ये आनन्दज्ञाने यस्य स तथा । अद् भक्षण इति धातोरादिनः प्रजाभक्षणशीला दैत्यास्तान् त्यजतीति वा । त्यज विसर्ग इति धातोः कर्तरि डः ॥ ज्योतिरादित्यो ज्योतिषामादिर्ज्योतिरादिः सूर्यस्तस्मिंस्तिष्ठ-तीति तथा ॥ सहत इति सहिष्णुः ॥ गत्या ज्ञानेन सन्तो गतिसन्तो गतिसद्भिस्तम्यते आकाङ्क्ष्यत इति गतिसत्तमः । गम्यत इति गतिरतिशयेन सन्सत्तमः । गतिश्चासौ सत्तमश्चेति गतिसत्तमः ॥ ६० ॥

## सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
## दिवस्स्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥

भा०—॥ सुधन्वेति । सुधन्वा शोभनं धनुर्यस्य सुधन्वा । धनुषश्चेत्यनङ् ॥ अथ रुद्रविद्योतार्थमीषिका नरः उद्धरन् । मन्त्रं च संयुयोजाशु सोऽभवत्परशुर्महान् । क्षिप्तश्च सहसा तेन खण्डनं प्राप्तवांस्तदा । ततोऽहं खण्डपरशुः स्मृतः परशुखण्डनात् इति मोक्षधर्मोक्तेः । खण्डः खण्डितः परशुर्यस्य स खण्डपरशुः । अखण्डपरशुरिति च्छेदोऽपि ॥ दारुवत्काष्ठमयप्रतिमामिव नयति लोकमिति दारुणः । शत्रुविदारकत्वाद्वा दारुणः ॥ ५७० ॥ द्रविणं विद्याधनात्मकं वित्तं प्रददातीति द्रविणप्रदः । द्रवः चित्तस्य येषामस्तीति द्रविणो हरिभक्तास्तेभ्यो णप्रदः स्वरूपसुखप्रदः ॥ दिवः श्वेतद्वीपानन्तासनवैकुण्ठान् स्पृशतीति दिवस्स्पृक् । तदुक्तं छान्दोग्यभाष्ये । स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः । नारायणो वासुदेवो वैकुण्ठ इति ते त्रय इति ॥ सर्वं पश्यतीति सर्वदृक् ॥ विशिष्टः सर्वस्मादिति विः । आ समन्तात्स इत्यासः । सृ गतौ सृप्लृ गतावित्यतो वा डे रूपमेतत । न तु तददः व्यासमित्याद्यनुपपत्तेः । तथा चाग्नेयशाखायाम् । स व्यासो वीति तमवैाह सोऽधस्तात्स उत्तरतः स पश्चात्स पूर्वस्मात्स दक्षिणतः स उत्तरतः इति । सर्वदृग्व्यास इत्येकं पदमित्याहुः ॥

वाचस्पतिः । षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेष्विति षष्ठ्या अलुक् । सकलवाङ्मनसदेवतायाः पतिः ॥ अयोनिजः । न च गर्भेऽवसद्देव्या न चापि वसुदेवत इत्युक्तेर्योनिजो न भवतीत्ययोनिजः । अयोनेः स्त्रीचिह्नरहितात्स्तम्भादेर्जायत इति वा । योनिभिन्ने नाभौ जनयति चतुर्मुखमिति वा । अयः शृङ्खलादिरूपमनिजानामभक्तानां यस्मात्सोऽयोनिजः ॥ ६१ ॥

**त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।**
**संन्यासकृच्छमः शान्तो निष्ठा शांतिः परायणः ॥**

भा०-॥ त्रिसामेति । त्रीणि सामानि निधनोद्गीथप्रतीहाराख्यानि यस्य स त्रिसामा ॥ सेति भार्या हि वाग्देवी प्राणो मः परिकीर्तितः । एवं तौ सामनामानाविति छान्दोग्योक्तेः सामशब्दाभिधेयभारतीप्राणयुगतत्वात्सामगः । शुभाशुभानां दाहादौ साम्यात्सामाग्निरीरितः । अग्निः सामाभिमानी स्यादिति छान्दोग्यभाष्योक्तेः सामगोऽग्न्यन्तर्गतो वा । साम्ना सामवेदेन गम्यत इति वा ॥ सर्वभूतेषु समत्वात्साम ॥ निर्वाणं प्राकृतशरीरशून्यम् । कायो वाणं शरीरं चेत्यभिधानात् । निर्गता वाणा बाणा वेद्धुमशक्या यस्मादिति वा ॥ ५८० ॥ संसाररोगस्यौषधरूपत्वाद्भेषजम् । भेषयतीति भेषो रोगस्तं जयतीति वा भिषज इदं भेषजमश्व्यन्तर्गतमौषधनियामकम् । भिषक्

संसाररोगस्य वैद्यः । भिषज्यतीति चिकित्सतीति भिषक् । भिष् चिकित्सायामित्यतः कण्ड्वादिभ्यो यगिति यक् ततः क्विप् ॥ संन्यासं काम्यकर्मत्यागं कारयतीति संन्यासकृत् । सम्यक् न्यासं दोषत्यागं करोतीति वा । अननुस्वारपाठपक्षे सतां भगवद्भक्तादीनां न्यासो येषां ते सन्न्यासा दैत्यास्तान्कृन्ततीति ॥ शम आनन्दरूप इति माण्डूकोक्तेः शम आनन्दरूपः । शं ब्रह्मादिसुखं माति जानातीति वा ॥ शस्य सुखस्य खज्ञात्प्रागन्तो बन्धो यस्मादिति शान्तः । शर्वः शंरोधनाद्धरिरित्युक्तेः शस्य दैत्यसुखस्यान्तो नाशो यस्मादिति वा । सुखावधिरिति वा ॥ नितरां स्थितिर्यस्य स निष्ठा ॥ शान्तिनामा सुखोन्नतेरित्युक्तेः शान्तिरुन्नसुखः । अन्तिषद्भूत्तु वामन इतिवत् । शं सुखमन्तिरन्तिके यस्येति वा ॥ परायणं मुक्ताश्रयः । परमयनं यस्मादिति वा ॥ ६२ ॥

**शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।**
**गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥**

भा०—॥ शुभाङ्ग इति । शुभान्यङ्गानि यस्य स शुभाङ्गः । शुभस्याङ्गभूतं ज्ञानं यस्मादिति वा ॥ शान्तिदो मोक्षदः ॥५९०॥ जगत्सर्जनात्स्रष्टा । सृज विसर्गे ॥ कौ मोदत इति वा भूभारहरणात्कुं मोदयतीति वा कुमुदः ॥ कुवलेशयः कुवले बदरिकाश्रमे शेत इति वा । कोर्भूमेर्बले । तादर्थ्ये सप्तमी ।

बलार्थं श्वेतद्वीपे शेत इति वा । कोर्भूमेर्बले परिवर्तने शय आशयो यस्येति वा । कुर्भूमिः कुश्च बलं च कुबले । प्रथमाया अलुक् । ते शये हस्ते यस्येति वा । कौ भूमौ बलेशेन बलदेवतारूपहनुमता यायते प्राप्यत इति वा ॥ गवां सास्नादि-मतां वेदादिरूपवाचां वा कृष्णव्यासादिरूपेण हितकारित्वा-द्गोहितः । गोषु नेत्रेषु जलेषु निहितत्वाद्वा । य एषोऽन्तरक्षिणि पुरुषो दृश्यत इति श्रुतेः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत इति स्मृतेश्च ॥ गवां स्वर्गपशुवाग्वज्रदिङ्नेत्रभूजलानां पतिः पालको गोपतिः ॥ गोप्ता सर्वरक्षकः ॥ वृषेण धर्मेण भान्तीति वृषभाः सज्जनास्तेष्वक्षि कृपादृष्टिर्यस्य स वृषभाक्षः । वृषभस्याक्षिणीवाक्षिणी यस्येति वा । वर्षणाद्भक्ताभिलषित-सेचनाद्वृषभः । न विद्यते क्ष क्षयो यस्य सोऽक्षः । वृषभ-श्चासावक्षश्चेति वृषभाक्षः ॥ वृषप्रियो धर्मप्रियः ॥ ६३ ॥

**अनिवर्ती निवृत्तात्मा सङ्क्षेप्ता क्षेमकृच्छिवः ।**
**श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥**

भा०–॥ अनिवर्तीति । अनिषु मुख्यप्राणदासेषु वर्तत इत्यनिवर्ती । कदाऽपि न निवर्तत इति वा ॥ निवृत्तात्मा निवृत्ता आत्मानो जीवाः प्रलये यस्मादिति वा । निवृत्ता आत्मानो मनांसि यस्मादिति वा यतो वाचो निवर्तन्तेऽप्राप्य

मनसा सहेति श्रुतेः । यन्मनसा न मनुत इति च ॥ ६०० ॥ सङ्क्षेप्ता सम्यक् क्षेप्ता । अङ्गुष्ठेन दुन्दुभिशरीरस्य दूरे क्षेप्ता सम्यक् शरक्षेप्ता वा । सृष्टौ विस्तृतस्य जगतः प्रलयेन सङ्कोचको वा । क्षेमं करोतीति क्षेमकृत् । योगक्षेमं वहाम्यहमित्युक्तेः । अक्षेमं कृन्ततीति वा छेदः ॥ सुखात्मकत्वाच्छिवः । शिवं मङ्गलमस्यास्तीति शिवः । अर्शआद्यच् । तत्करोतीति ण्यन्तात्पचाद्यच् । शिनो मुक्तास्तान्वर्तयतीति वा शिवः ॥ श्रिया युक्तः वत्सः महत्त्वलक्षणं श्वेतरोमावर्तविशेषो वक्षसि यस्य स श्रीवत्सवक्षाः ॥ श्रीर्वसत्यस्मिन्निति श्रीवासः ॥ श्रियः पतिः श्रीपतिः ॥ श्रियः सरस्वत्यादयस्ता येषां सन्तीति श्रीमन्तो ब्रह्मादयस्तेषां वरः श्रियो मतमवरं यस्य स श्रीमतां वरः । श्रिया मतमभिमतमम्बरमाकाशमाधारत्वेन यस्येति वा । यो वेद निहितं गुहायां परमे व्योमन्निति श्रुतेः ॥ ६४ ॥

**श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः**
**श्रीधरः श्रीकरः श्रेयः श्रीमान् लोकत्रयाश्रयः ॥**

भा०— श्रीद इति । श्रियं ददातीति श्रीदः । श्रियै रुक्मिण्यै प्रद्युम्नं ददातीति वा ॥ श्रियः शं सुखं यस्मादिति श्रीशः ॥ श्रियां निवसत्यन्तर्यामितयेति श्रीनिवासः । श्रियं नयतीति श्रीनिर्वसति जनोऽत्रैवेति वासः । श्रीनिश्वासौ वासश्चेति

श्रीनिवासः ॥ ६१० ॥ श्रियः कान्तयो निधीयन्त इति श्रीनिधिः ॥ श्रियो रमाया विशेषेण भावान्नयतीति श्रीविभावनः। श्रियो रमाया विभाभिरवति तृप्तो भवतीति श्रीविभावनः। श्रियो विशिष्टा भा यस्याः सा श्रीविभा सीता तस्या वनं संभजनं यस्यासाविति वा। श्रियो विभूतीर्विविधं भावयतीति श्री विभावनः। तदुक्तं स्कान्दे – व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे इति ॥ धरतीति धरः श्रियो धरः श्रीधरः ॥ श्री रमा करे यस्यासौ श्रीकरः। श्रियः संपदः करः श्रीकरः ॥ श्रेयोऽतिशयेन प्रशस्यं। श्रियं मातीति श्रीमान्। मा मान इति धातोः। शत्र्युगिदचामिति नुमागमे हल्ङ्यादिना सुलोपे संयोगान्तलोपे मान्रूपम् ॥ लोकं त्रायत इति लोकत्रः। त्रैङ् पालन इत्यत आतोऽनुपसर्गे क इति कः। ई लक्ष्मीस्तस्या आश्रयो याश्रयः। लोकत्रश्चासौ याश्रयश्चेति लोकत्रयाश्रयः। लोकत्रयस्याश्रय इति वा। लोकत्रयस्य लिङ्गानिरुद्धस्थूलदेहस्य जीवा अभिमानितयाऽऽश्रया यस्मादिति वा ॥ ६५ ॥

**स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः।**
**विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥**

भा०–॥ स्वक्ष इति। शोभनान्यक्षाणीन्द्रियाणि यस्येति स्वक्षः। शोभने अक्षिणी अर्जुनस्य यस्मादिति वा। दिव्यं ददामि

ते चक्षुरिति गीतोक्तेः ॥ शोभनान्यङ्गानि यस्य स स्वङ्गः । भक्तान्स्वं गमयतीति वा । द्वितीयाया अलुक् ॥ शतमनन्ता आनन्दा यस्येति वा । शतमानन्दाश्चतुर्मुखस्य यस्मादिति वा शतानन्दः ॥ ६२० ॥ नन्द आनन्दोऽस्यास्तीति नन्दी नन्दयतीति वा । ज्योतिर्गणस्य सूर्यादिसमुदायस्येश्वरः । जातमोतं हरौ यस्मादित्युक्तेः जातमुत्पन्नं सर्वमोतं यस्मिन्निति वा ज्योतिर्द्योतन इति वा । गणस्य देवतासमुदायस्येश्वरः स चासौ स चेति वा ॥ विजिता आत्मानो जीवास्तन्मनांसि वा येनेति वा ॥ विना गरुडेन जितः प्राप्त आत्मा देहो यस्येति वा । विधेयात्मा विधेये विधिविषये स्नानदानादौ आत्मा मनो यस्यासौ विधेयात्मा ॥ सती कीर्तिर्यस्यासौ सत्कीर्तिः । तन्नाम्नी भार्या यस्य वामनरूपे स इति वा । तदुक्तं षष्ठस्कन्धभागवते । उरुक्रमस्य देवस्य माया वामनरूपिणः । कीर्तौ पत्न्यां बृहच्छ्लोकास्तस्यासन्सौभगादय इति ॥ छिन्नः संशयो येनासौ छिन्नसंशयः ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर इति श्रुतेः ॥ ६६ ॥

**उदीर्णस्सर्वतश्चक्षुरनीशः शाश्वतास्थिरः ।**
**भूशयो भूषणो भूतिर्विशोकश्शोकनाशनः ॥**

भा०–॥ उदीर्ण इति । उः रुद्रः प्रलयकाले दीर्णो येना-

सावुदीर्ण उत्कृष्टत्वाद्वा ॥ सर्वतश्चक्षुः । प्रथमान्तात्तसिः । सर्वं पूर्णं चक्षुर्यस्यासौ तथा । सर्वत्र चक्षुर्यस्येति वा । सप्तम्यन्तात्तसिः ॥ न विद्यत ईशो यस्य सोऽनीशः । अनिनां प्राणिनामीश इति वा ॥ शश्वद्भवः शाश्वतः । शाश्वतश्चासौ स्थिरश्च शाश्वतस्थिरः ॥ ६३० ॥ भूशयो भूः शये हस्ते यस्य स तथा । भूरूपया रमया शेत इति वा । भुवि शेत इति वा ॥ भूषयतीति भूषणः । भू पूर्णौ षणौ चेष्टानन्दौ यस्येति वा । भूषणान्यस्य सन्तीति वा ॥ भूतिरैश्वर्यरूपः ॥ विगतः शोको यस्मात्स विशोकः । विशेषेण शं सुखं यस्मिंस्तत् विशं तदोको वैकुण्ठादिर्यस्य तद्ब्रह्म तथेति वा ॥ शोकं नाशयतीति वा । शोकस्य नाशो येषां ते शोकनाशा मुक्तास्तान्नयतीति वा ॥ ६७ ॥

**अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।**
**अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥६८॥**

भा०-॥ अर्चिष्मानिति । अर्चींष्यस्य सन्तीत्यर्चिष्मान् ॥ ब्रह्मादिभिरर्चितत्वादर्चितः ॥ कुं भूमिं भासयतीति कुम्भः ॥ विशुद्ध आत्मा यस्य स विशुद्धात्मा ॥ विशेषेण शोधयति वेदानिति विशोधनः ॥ ६४० ॥ निरुद्धो न भवतीत्यनिरुद्धः । अनिरुद्धाः संसारमुक्तास्तान्दधाति धारयति पोषयतीति वा । अनिरस्तमुदाख्यं नाम धत्त इति वा । एतस्योदेति

चामेति श्रुतिः ॥ अप्रतिरथः प्रतिपक्षरहितः ॥ प्रद्युम्नो दिवि स्नायत इति द्युम्नं यशः प्रकृष्टं द्युम्नं यस्यासौ तथा । अमितोऽपरिमितो विक्रमो यस्य सोऽमितविक्रमः । मितविक्रम इति च्छेदे वेदादिप्रमाणप्रमितो विक्रमो यस्येत्यर्थः ॥ ६८ ॥

**कालनेमिनिहा वीरश्शौरिश्शूरजनेश्वरः ।**
**त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥**

भा०–॥ कालेति । कालनेमिं निहन्तीति कालनेमिनिहा । विशेषेणेरयतीति विशिष्टान्वा वीरः । शूरयति जनानिति शूरः । शौरिः शूरकुलोद्भवः ॥ शूरजनेश्वरः शूरवंशजातत्वाच्छूरजो न विद्यत ईश्वरो यस्य स नेश्वरः । शूरजश्चासौ नेश्वरश्च स तथा ॥ लोकानामात्मा लोकात्मा त्रयाणां लोकात्मा त्रिलोकात्मा । त्रयश्च ते लोकाश्चेति न विशेषणसमासः । दिक्संख्ये संज्ञाया-मिति संज्ञायामेव तस्य नियमितत्वात् । अत एव शेषवाक्यार्थे चन्द्रिकायां सप्तघटिकाभोजनमिति सुधाप्रतीकमुपादाय सप्त च ता घटिकाश्च न विशेषणसमासः । दिक्संख्ये संज्ञायामिति संज्ञायामेव नियमितत्वात्सप्तघटिकाभोजनमित्युभयत्रापि सप्तमीति योगविभागादेव समासः । सप्तत्वं तु सामर्थ्याद्धटिकास्वेवा-न्वेति । साध्यो धर्मो यस्येति साध्यधर्मेति व्युत्पाद्य सन्दिग्ध-श्चासौ साध्यधर्मा चेति कर्मधारयेऽपि सन्दिग्धतायाः साध्य-

मात्रपर्यवसायित्वस्य नवरसरुचिरामित्यत्र नवत्वस्य रसेष्वेव पर्यवसानस्य लोकानां नाथ इति लोकनाथपदं व्युत्पाद्य त्रयाणां लोकनाथ इति विगृह्य समासेऽपि त्रित्वस्य सामर्थ्यात्प्रसिद्धेश्च लोकेष्वेव पर्यवसानस्य च दर्शनादत्यत्रधेयमित्युक्तम् ॥ ६५० ॥ केशौ शुक्लकृष्णकेशौ वर्तयति भूमाविति केशवः । केशेन कृष्णकेशेन वाति गन्धयति दैत्यानिति केशवः ॥ केशिनामानं हन्तीति केशिहा । द्रौपद्याः केशाः कबरीभाराः कर्षकतयाऽस्य सन्तीति केशी दुःशासनस्तं हन्तीति वा ॥ हरति पापमिति हरिः ॥

**कामदेवः कामपालः कामी कान्तः कृतागमः ।**
**अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥७०॥**

भा०—॥ कामदेव इति । कामदेवः कामवत् द्योतत इति । दिवु क्रीडाविजिगीषाद्युतिस्तुति इति धातोः ॥ कामान्पालयतीति कामपालः । केन चतुर्मुखेन वायुना वाऽम्यते गम्यत इति कामः पालयति जनानिति पालः । कामश्चासौ पालश्च कामपालः । कामयते जगद्रक्षणादिकमिति कामी ॥ कान्तो मनोहरः ॥ कृतागमः कृत आगमः पुराणादिर्येनेति वा । कृतश्छिन्नः । कृ हिंसायामिति क्तः । अगमो विषवृक्षोऽर्जुनवृक्षो वा येनेति वा । भूमौ कृतोऽगः पारिजातवृक्षो यया सा कृतागा मा सत्यभामा यस्य स इति वा । कृतेन कर्मणा न

गम्यत इति वा कृतागमः ॥ अनिर्देश्यं वपुर्यस्य सोऽनिर्देश्यवपुः । तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखमिति श्रुतेः ॥ विष्णुः विष्णुशब्दस्तु बहुधा व्याख्यातः । ऐतरेयभाष्ये विष्णुनाम्नि णशब्देन विष्णोर्बलमुदीर्यते । ण इत्याक्रियमाणत्वाण्णकारोऽस्य बलं मतम् । विष्णुनाम्नि षकारेण रमाब्रह्मेशपूर्विणः । प्रणेतृ नाखिलस्यैव विष्णोरुक्तात्मता तथा । आततत्वं सर्वगुणैर्देशतः कालतस्तथा । आत्मशब्दोदितस्तच्च षशब्देनाभिधीयते । ष इत्याक्रियमाणत्वात्प्रणेतृत्वं च पूर्णता । विष्णोः षकार इत्युक्तो वीत्युक्तस्य विशिष्टता । अन्त्यस्थित उकारस्तु ताच्छील्याद्धरेर्वदेत् । एवं विशिष्टप्राणत्वमनन्तत्वं च सर्वतः । विशिष्टं च बलं विष्णोः सर्वस्माच्छीतमित्यपि । उदितं विष्णुशब्देन तस्मादृक्संहितामनु । वर्णद्वयसमायोगे ष्णुशब्दस्यार्थमेव तु । विष्णोः प्राणत्वमात्मत्वं बलं चैवात्र वेत्ति यः । स एव विष्णोर्बलवत्तथा प्राणत्वविद्भवेत् । स एव मुक्तः संसारान्नित्यायुष्मान्भविष्यतीति ॥ ६९ ॥ विशिष्टेरा इच्छानुरूपं सुखं यस्य स वीरः । तदुक्तमैतरेयभाष्ये । इच्छानुरूपं तु सुखमीरेत्यनेन प्रकीर्तितमिति । यद्वा वीरः समर्थः ॥ अनन्तो न विद्यतेऽन्तो नाशो यस्य सोऽनन्तः ॥ धनं जयतीति धनञ्जयः ॥ ७० ॥

**ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।**
**ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥**

भा० –।। ब्रह्मण्य इति । ब्राह्मणप्रियत्वाद् ब्रह्मण्यः । बृह्मयत्यानन्देन मुक्तानिति ब्रह्मा ब्रह्मण्यस्तन्नामकसुधासमुद्रो यस्मादिति वा ।। ब्रह्म वेदास्तपस्तत्त्वमित्युक्तेर्ब्रह्म आलोचनात्मकं तपः करोतीति ब्रह्मकृत् । अब्रह्मकृदिति पदच्छेदे अवतारे मे षोडशमे यच्छन्ब्रह्मद्रुहो नृपान् । त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीमित्युक्तेः । ब्रह्मभिन्नतत्सदृशदुष्टक्षत्रियान्परशुरामाख्यरूपेण निरीश्वरवादिनो वा कृणोतीति तथा ।। ब्रह्मा बृह्मयति वर्धयति भक्तानिति तथा । बृहि वृद्धौ ब्रह्म पूर्णं पूरकं च । अथ कस्मादुच्यते परं ब्रह्म बृंहयति चेति श्रुतेः ।। ब्रह्मविवर्धनो ब्रह्म वेदस्तं वर्धयति व्यासरूपेणेति तथा ।। ब्रह्मविद्वेदज्ञः । मम योनिर्महद् ब्रह्म तस्मिन्गर्भं दधाम्यहमित्यत्र रमायां ब्रह्मशब्दप्रयोगात् रमां विन्दत इति वा । स्वस्वरूपं वेत्तीति वा । तदात्मानमेवावेदिति श्रुतेः । ब्रह्मणा वेदेन गम्यत इति ब्राह्मणः । स्पष्टं चैतत्पत्यादिशब्देभ्य इति प्रथमाध्यायतृतीयपादीयसूत्रभाष्यटीकायाम् । न च विष्णौ ब्राह्मणशब्दानुपपत्त्याऽजशब्दापहारः ब्रह्मणा वेदेन गम्यत इति योगेनोपपत्तेः । स्वरव्यत्ययस्याधिक्यार्थत्वात् अण गतौ इति धातोरिति । तत्र चन्द्रिका स्वरव्यत्ययस्याधिक्यार्थत्वादिति । आधिक्येऽधिकमित्येव हरिणा सूत्रमीरितमिति ऋग्भाष्य उक्तत्वात् । ब्रह्मणा वेदेन गम्यत्वादाधिक्यविवक्षया दीर्घ इत्यर्थ इति ।।

ब्रह्माणि जीवा अस्य सन्तीति ब्रह्मी । अकारान्तादिनि-प्रत्ययस्तु प्राणी तु चेतनो जन्मीत्यत्रेव व्रीह्यादित्वाद्बोध्यः ॥ ६७० ॥ ब्रह्मज्ञो ब्रह्मा चतुर्मुखो ज्ञो ज्ञाता यस्यासौ ब्रह्मज्ञः ॥ ब्राह्मणप्रियो ब्रह्माणतीति ब्राह्मणो ज्ञानी स एव प्रियो यस्य स ब्राह्मणप्रियः । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय इत्यादेः । अथवा प्रथमे ब्राह्मणो मुक्तो द्वितीयो योग्य उच्यत इति अथ ब्राह्मणः केन स्यादित्यादिश्रुतिव्याख्यानरूप-बृहद्भाष्योक्तेः । ब्राह्मणा मुक्तास्तेषां प्रियत्वाद्वा ॥ ७१ ॥

## महाक्रमो महाकर्मा महातेजा महोरगः ।
## महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥७२॥

भा०—॥ महाक्रम इति । महाक्रमोऽग्निमीळ इत्यादि-वेदक्रमो यदीयबुद्धौ स महाक्रमः । वेदास्ते नित्यविन्नत्वाच्छ्रुतय-श्चाखिलैः श्रुतेः । आम्नायोऽनन्यथापाठादीशबुद्धिस्थिताः सदेति स्मृतेः ॥ महत्कर्म जगत्सृष्ट्यादिरूपं यस्येति महाकर्मा । अकर्माऽक्लिष्टकारित्वादित्युक्तेः न विद्यते क्लिष्टं कर्म यस्य सोऽकर्मा महांश्चासावकर्मा चेति वा ॥ महातेजा महत्सूर्यादितेजो-नियामकं तेजो यस्य स तथा ॥ उरसा गच्छतीत्युरगः । महानुरगः शेषः कालियो वा दासत्वेन यस्येति महोरगः ॥ स क्रतुर्ज्ञानरूपत्वादित्युक्तेः क्रतुर्ज्ञानरूपः। महांश्चासौ क्रतुश्चेति महा-

क्रतुः ।। महान्तो ब्रह्मादयो यज्वानो यस्मै स महायज्वा ।। महान्तो यज्ञा अश्वमेधादयो यद्विषय इति महायज्ञः । अयं शुभावहविधिं जानातीत्ययज्ञः । महांश्चासौ स चेति तथा । अमहायज्ञ इति च्छेदे अमं रोगं हन्तीत्यमहः अयं जानातीत्ययज्ञः । अमहश्चासावयज्ञश्चेति वा ।। महाहविः । राजाहःसखिभ्यष्टच् । महाहेषूत्सवदिनेषु विर्गरुडो वाहनत्वेन यस्य सः । आहूयत इति हविः । महांश्चासौ हविश्चेति वा ।। ६८० ।। ७२ ।।

**स्तव्यस्स्तवप्रियस्स्तोत्रं स्तुतिस्स्तोता रणप्रियः ।**
**पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ।।७३।।**

भा०–।। स्तव्य इति । स्तोतुं योग्यः स्तव्यः ।। स्तवप्रियः स्तुतिप्रियः ।। स्तूयत इति स्तोत्रम् ।। जनकर्तृकस्तुतिनियामकत्वात् स्तुतिः ।। न ऋते त्वत्क्रियत इत्युक्तेः स्तुतिकर्तृत्वात्स्तोता ।। रणो युद्धं प्रियो यस्य सः । यद्वा रणो वेदात्मकः शब्दः प्रियो यस्येति वा ।। पूर्णो गुणैः पूर्णः ।। पूरयिता तत्तद्योग्यतानुसारेण ।। पुनातीति पुण्यः । पूञ् पवन इत्यतः ।। पुण्यकरा कीर्तिर्यस्य स पुण्यकीर्तिः ।। ६९० ।। अनामयो रोगशून्यः । अनेन मुख्यप्राणेन अम गत्यामिति धातोरमं प्राप्यं यापयतीति वा ।। ७३ ।।

**मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।**
**वसुप्रदो वासुदेवो वसुर्वसुमना हविः ।। ७४ ।।**

भा०–॥ मनोजव इति । मनसो जव इव जवो यस्य सः । मनसो जवो यस्मादिति वा ॥ तीर्थं शास्त्रं करे यस्य स तीर्थकरः शङ्खाक्षपुस्तकसुबोधयुक्ताब्जबाहुमित्युक्तेः । शास्त्रकृत्त्वाद्वा ॥ वसु तोये धने मणावित्युक्तेर्वसुनि जले रेतो यस्य स वसुरेताः । अप एव ससर्जादौ तासु वीर्यमवासृजदित्युक्तेः ॥ वसूनि धनानि रत्नानि वा प्रकर्षेण ददाति भक्तानामिति वसुप्रदः । वसुं वस्ववतारं भीष्ममर्जुनार्थं प्रकर्षेण खण्डयतीति वसुप्रदः । वसूनां देवः श्रेष्ठो वसुदेवो भीष्मस्तस्य स्वामित्वाद्वासुदेवः । यद्वा वसुभिर्देवैर्ज्ञानादिरूपान्तरद्रव्यैर्वा दीव्यति प्रकाशत इति वसुदेवशब्दितं ब्रह्मशरीरं तत्र ज्ञायत इति वासुदेवः । अथवोक्तनिर्वचने वसुदेवशब्दितब्रह्मशरीरस्यायमाधार इति वा । तदुक्तं चतुर्थभागवते—सत्त्वं शुद्धं वसुदेवशब्दितं यदीयत तत्र पुमानपावृतः । स त्वं च यस्मिन्भगवान्वासुदेवो ह्यधोक्षजो मे मनसा विधीयत इति । तत्र विशुद्धं सत्त्वं ब्रह्मशरीरं तत्रापावृतः पुमान् हरिर्यस्मादीयत इति योजना ॥ वसतीति वसुः ॥ वसुनामकस्य राज्ञो वा, अष्टवसूनां वा मनो यस्मिन्निति वसुमनाः । वसुनि स्यमन्तकमणौ भक्तदत्ततोये वा मनो यस्येति वा ॥ हूयत इति हविः ॥ ७४ ॥

**सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।**
**शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥७५॥**

भा०—॥ सद्गतिरिति। तत्सत्तादिप्रदः। यदधीना यस्य सत्ता तत्तदित्थेव भण्यत इत्युक्तेः। सतां नक्षत्राणां गतिर्यस्मादिति सद्गतिः। सतां सज्जनानां गतिर्गम्यं यस्मादिति वा ॥ ७०० ॥ सती कृतिर्यत्नो वा तन्नाम्नी जाया वा यस्य प्रद्युम्नादिरूपस्य स सत्कृतिः ॥ सीदतीति सत्ता। अथवा सत्ता आनन्दाश्रय आनन्दकरश्च। अथ कस्मादुच्यते सत्तेति नन्दयतीति भागवतप्रथमतात्पर्योदाहृतपैङ्गिश्रुतिः ॥ सद्भूतिः सतां भूतिर्यस्मादिति वा। सती भूतिर्यस्यासाविति वा ॥ सत्परायणः सतां योग्यानां परायणं मुख्याश्रयः। सत्पराणां; सद्भाव प्राणः। प्राणं वाव महान्सह ओजो बलमित्याचक्षत इति श्रुतेः, ततो वयं सत्प्रमुखा यदर्थे इति भागवते प्रयोगाच्च, सत्पराणां वायुरतानामयनमाश्रयः ॥ शूरसेनः इनेन स्वामिना सहिताः सेनाः शूराः सेना येन स शूरसेनः। शूराणां जरासन्धादीनां सेना यस्मादिति वा। यदुश्रेष्ठो यदस्ति तत उच्चत्वाद्यदुशब्दा रमादयस्तेषां श्रेष्ठः। यदूनां श्रेष्ठ इति वा ॥ सन्निवासः सन्तः सज्जनाः सद्गुणा वा निवसन्त्यस्मिन्निति सन्निवासः। शोभनं यामुनं यमुनासम्बन्धिजलं कालियनिष्कासनेन यस्मादिति सुयामुनः ॥

**भूतावासो वासुदेवः सर्वासुनिलयोऽनलः।**
**दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ७६ ॥**

भा०—॥ भूतावास इति । भूतान्यवतीति भूताव आसरतीत्यासः । भूतावश्चासावासश्च । भूतानि वसन्तीति वा ॥ वासुदेवो वसतीति वासुर्वायुस्तस्य देवो वासुदेवः । वार्थं ज्ञानार्थं जातोऽसुदेवः प्राणदेवो यस्मादिति वा । अवासुदेव इति पदच्छेदे न विद्यते वासुदेवः सृगालवासुदेवः यस्मादिति वा ॥ ७१० ॥ सर्वासुनिलयः सर्वासूनां सर्वप्राणिनां निलय आश्रयः ॥ अनलो भक्ताभीष्टदानेऽलम्बुद्धिर्नास्तीत्यनलः ॥ दर्प-मसुराणां हन्तीति दर्पहा ॥ दर्पं गर्वमयोग्येभ्यो ददातीति वा, दर्पशब्दादर्शआद्यचि दर्पिणो द्यति खण्डयतीति वा दर्पदः । दृप्तो मत्तप्रवृत्तिः ॥ दुर्धरो धारयितुमशक्यः ॥ अपराजितोऽपरै-र्विष्णवासक्तैराजितः प्राप्तः पराजितो न भवतीति ॥ ७६ ॥

**विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।**
**अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥**

भा०—॥ विश्वमूर्तिरिति । विश्वो वायुर्मूर्तिः शरीरं यस्य स विश्वमूर्तिः । उद्गीताख्यस्य विष्णोर्विशिष्टप्रतिमा वायुरित्युक्तेः । जगन्मूर्तिक इति वा । अनन्तरूपो वा । स विश्वरूपोऽनूनरूपो यतोऽयं सोऽनन्तो न हि नाशोऽस्ति तस्येति शाण्डिल्य-शाखायाम् ॥ महामूर्तिर्महती विराड्रूपा मूर्तिर्यस्य सः ॥ दीप्त-मूर्तिर्दीप्ता मूर्तिर्यस्य ॥ ७२० ॥ अमूर्तिमान् प्राकृतमूर्तिमान्न

भवतीति तथा। आनन्दज्ञानशक्त्यादिदेहं विष्णुं तु ये जनाः। अदेहं भूतदेहं वा विदुस्ते चाधरन्तमः। तथा प्राकृतदेहज्ञाः कर्मदेहविदोऽपि वेत्युक्तेः॥ अनेकावतारमूर्तिरस्येत्यनेकमूर्तिः॥ अव्यक्तो विशेषेणाव्यक्तः। दोषैर्व्यक्तो न भवतीत्यव्यक्तः। अनुग्रहं विना न व्यज्यत इति वा। तदव्यक्तमाह हीत्युक्तेः॥ शतं मूर्तयो यस्येति शतमूर्तिः॥ शताननः शतानामनन्तानामननं चेष्टा यस्मात्सः। शतान्याननानि यस्येति वा शताननः। अनेकवक्त्रनयनमित्युक्तेः॥ ७७॥

एको नैकः सवः कः किं यत्तत्पदमनुत्तमम्।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः॥

भा०–॥ एक इति। एक एकत्वादेककर्तृत्वादेकः। त्वमेव कारयिता नान्योऽस्तीति गीताभाष्योक्तेः। एकः प्रधानः असमानो जगद्भिन्नोऽसहायः प्रथमः केवल एकत्वसङ्ख्यावानिति वा। तदुक्तं न्यायामृते—किञ्च न तावदेकशब्देन मिथ्यात्वसिद्धिः। तस्य मानान्तराविरोध्यनेकार्थत्वात्। एके मुख्यान्यकेवला इत्यमरोक्तेः॥ नैकोऽनेकरूपः। सवः सूयतेऽस्मा इति सवः। वा गतिगन्धनयोरिति धातोर्वा ज्ञानं तेन सहितो वा॥ कन दीप्तावित्यतो डप्रत्यये क इति रूपं दीप्तः। कायतेर्डिमिः किं पुराणादिरूपशब्दकर्ता। किं सर्ववेदविचारविषयो वा॥७३०॥

इति जानातीति यत् । यच्च ज्ञानं स्वरूपत इत्यैतरेयभाष्योक्तेः । तत् परोक्षं वस्तु तच्छब्दवाच्यम् । हरिस्तु प्रत्यक्षाद्यवेद्यत्वेन मुख्यतो वेदैकगम्यत्वाद्वा गुणैस्ततत्वाद्वा तदित्युच्यते । तदुक्तम् । ओं तज्जगद्यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च । सर्वैः शुभैश्चाभियुतो न चान्यैः ओं तत्सदित्येनमतो वदन्तीति ॥ पद्यते गम्यत इति पदम् । न विद्यत उत्तमं यस्मात्तदनुत्तमम् । लोकानां बन्धुर्लोकबन्धुः ॥ लोकानां नाथो लोकनाथः । लुक् प्रकाशन इति धातोर्लोको ज्ञानरूपो नाथ्यत इति नाथो वा ॥ मधोरयं माधवः । मधु द्यौरस्तु नः पितेति श्रुतेः । मध्वित्यानन्द उद्दिष्ट इति स्मृतेश्च । मधु सुखं मधुनोऽयं दाता माधवः ॥ भक्तमन्नं येषामस्तीति भक्तवन्तो यज्ञकर्तारो ब्राह्मणास्तान्प्रति सलति गच्छतीति भक्तवत्सलः । भक्तेषु वात्सल्यवान्वा । भक्ता एव वत्सास्तान् लातीति वा ॥

सुवर्णवर्णो हेमांगो वरांगश्चन्दनांगदी ।
वीरहा विषमश्शून्यो घृताशीरचलश्चलः ॥

भा०—॥ सुवर्णवर्ण इति । सुवर्णमिव वर्णो यस्य सः सुवर्णवर्णः । यदा पश्यः पश्यते रुक्मवर्णमिति श्रुतेः । हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण इति श्रुतेः । हिरण्यपाणिमूतय इत्युक्तेश्च । हेमाङ्गः सुवर्णमस्याङ्गः ॥ ७४० ॥ वराण्युत्त-

मान्यङ्गानि यस्य स वराङ्गः। अवराङ्ग इति च्छेदेऽवतीत्यवो रङ्गस्य श्रीरङ्गक्षेत्रस्यायं राङ्गोऽवश्चासौ राङ्गश्चावराङ्गः ॥ चन्दनाङ्गदी चन्दनं तदुपलक्षितपूजासाधनद्रव्यमस्यास्तीति चन्दनः। स चासावङ्गदो वा वालिपुत्रश्च चन्दनाङ्गदः। भक्तत्वेन सोऽस्यास्तीति चन्दनाङ्गदी। चन्दनमङ्गदो बाहुभूषणं चास्यास्तीति चन्दनाङ्गदीति वा ॥ वीरान्हन्तीति वीरहा। यद्वा विगत ईरो मुख्यप्राणो येषां ते वीरास्तान्हन्तीति वीरहा ॥ विषमो विषं रुद्रपीतं मीनाति हन्ति स्वनामस्मरणेनेति विषमः। समरहितो वा। अविषम इति च्छेदे विषमो न भवतीत्यर्थः। तदुक्तम्। वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयतीति ॥ प्रलयकाले सर्वपदार्थशून्यत्वाच्छून्यः। दुर्जनानां शस्य सुखस्योनमूनत्वं यापयतीति शून्य इति वा। शमूनं कुरुते विष्णुरिति स्मृतेः ॥ घृते हविरात्मके घृते आशीः कामो यस्य स घृताशीः ॥ न चलतीत्यचलः ॥ चलतीति चलः ॥ ७९ ॥

**अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक्।**
**सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥**

भा०—॥ अमानीति। अमानी विषयेष्वभिमानरहितः ॥ मानदो मायै रमायै अनं वायुं ददाति पुत्रत्वेनेति मानदः। मर्यादाप्रवर्तको वा। यदि ह्यहं न वर्तेयमित्यादि गीतासु। मानं

ज्ञानं लयश्चैव मर्यादा चापि कथ्यत इति च ॥ ७५० ॥ मान्योऽनितुं चेष्टयितुं योग्योऽन्यः स न भवतीति मान्यः । माया रमाया अन्या चेष्टनीया यस्येति वा । माया रमोपलक्षितजीवराशेरन्यो भिन्न इति वा ॥ लोकानां वैकुण्ठादीनां जनानां स्वामी ॥ त्रिलोकान् द्युपृथिव्यन्तरिक्षान्धरतीति त्रिलोकधृक् त्रिलोकेति निर्देशस्तु पञ्चमस्कन्धेभ्य इतिवत् विशेषणं विशेष्येणेत्यनेन विशेषणसमासोऽयम् । न तु तद्धितार्थेत्यादिना समाहारद्विगुरिति विष्णुतत्त्वनिर्णयटीकोक्तरीत्या द्रष्टव्यः । प्रकारान्तरं त्वधस्तादुपपादितम् ॥ शोभना मेधा यस्य स सुमेधाः ॥ मेधे यज्ञे जायत इति मेधजः । धन्यो धन्याः सुकृतिनोऽस्य सन्तीति धन्यः । धनं यापयतीति वा । निर्वचनत्वादकारलोपः ॥ सत्ये जगद्विषये मेधा ज्ञानं यस्येति वा । सत्या मेधा यस्येति वा ॥ धरतीति धरो धराया धरो धराधरः । धरा मेरुमन्दरादयः पर्वता आधराः सम्यग्धारका यस्मादिति वा ॥ ८० ॥

**तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः ।**
**प्रग्रहो निग्रहोऽव्यग्रो नैकशृंगो गदाग्रजः ॥**

भा०-॥ तेज इति । तेजसां तेजोरूपाणां सूर्यादीनां वृष उरुक्रमरूपेण श्रेष्ठः । यद्वा तेजसाऽऽदित्यवर्तितेजसा वर्षणाज्जलवर्षणात्तेजोवृषः । आदित्याज्जायते वृष्टिरिति श्रुतेः ॥ द्युतिधरो

द्युतीनां कान्तीनां धरो धारकः ॥ ७९० ॥ सर्वशस्त्रभृतां वरः श्रेष्ठः । रामः शस्त्रभृतां वर इत्युक्तेः । सर्वशस्त्रायत इति सर्वशस्त्रो भृतमम्बरं येन स भृताम्बरः । अक्षरमम्बरान्तधृतेः । एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतः प्रोतश्चेति चोक्तेः । सर्वशस्त्रश्चासौ भृताम्बरश्चेति ॥ प्रग्रहः प्रकृष्टा ग्रहा नवग्रहा येनेति । प्रकृष्टा ग्रहाः सोमपात्रविशेषा यस्मादिति वा । ग्रहान्सोमस्य मिमते द्वादशेति श्रुतेः । प्रकृष्टान्गृह्णातीति वा । निगृह्णाति दैत्यानिति निग्रहः । व्यग्रो न भवतीत्यव्यग्रः । व्यग्र इति च्छेदे विगरुडोऽग्रे यस्य स तथा ॥ नैकशृङ्गो नैकान्यनेकानि शृङ्गाणि यस्य वृषरूपे स तथा । चत्वारि शृङ्गा इति श्रुतेः । वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृगित्येकादशे भगवद्वचनम् । ना एकशृङ्ग इति वा छेदः । परमपुरुषत्वान्ना । एकं शृङ्गं यस्य स तथा । तदुक्तं मोक्षधर्मे । एकशृङ्गः पुरा भूत्वा वराहो नन्दिवर्धनः । इमां चोद्धृतवान्भूमिमेकशृङ्गस्ततो ह्ययमिति ॥ गदाग्रजो गदोऽग्रजो यस्य कृष्णावतारे । यद्वाऽगदा नीरोगिणोऽग्रजा ब्राह्मणा यस्मादित्यगदाग्रजः ॥ ८१ ॥

**चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।**
**चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ८२ ॥**

भा०—॥ चतुर्मूर्तिरिति । चतस्रो विश्वतैजसप्राज्ञतुरी-

याख्या मूर्तयो यस्य स चतुर्मूर्तिः ॥ चत्वारो बाहवो यस्य स तथा । चत्वारो बाहवो मुक्तानां यस्मादिति वा । सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणा इति भागवतोक्तेः ॥ चतुर्व्यूहः केशवादिचतुर्विंशतिरूपेषु केशवादिषट्कं त्रिविक्रमादिषट्कं सङ्कर्षणादिषट्कं नारसिंहादिषट्कमित्येवं चत्वारो व्यूहा यस्य स तथा । चतुर्बाहुश्चतुर्व्यूह इत्येकं नामेति सम्प्रदायविदः ॥ चत्वारि आयुधानि चक्रशङ्खगदापद्मानि । क्रमव्युत्क्रमपद्मादिगदादिव्युत्क्रमस्तथा । अथक्रमः सान्तरश्च षट्सु षट्स्वरिपूर्विणामिति तन्त्रसारोक्तरीत्या चतुर्षु बाहुषु यस्य स तथा ॥ चतुर्विधा भजन्ते मामिति गीतोक्तेः, चतुर्भिरार्तजिज्ञास्वर्थार्थिज्ञानिभिर्गम्यत इति चतुर्गतिः ॥ ७७० ॥ चतुर्षु धर्मार्थकाममोक्षेषु जनानां योग्यतानुसारेणात्मा मनो यस्मात्स चतुरात्मा ॥ चतुरो वर्णान्ब्राह्मणादीन्भावयत्युत्पादयतीति चतुर्भावः । तदुक्तं बृहद्भाष्ये — विष्णोर्ब्राह्मणजातिः सन् ब्रह्मा जज्ञे चतुर्मुख इत्यादि ॥ चतुरो वेदान्वेत्तीति चतुर्वेदवित् ॥ एकपात् एकपो मुख्यपालकः सन्नततीति तथा । अत सातत्यगमन इति धातोः । पादोऽस्य विश्वा भूतानीति श्रुतेः, सर्वभूतान्येकः पादो यस्येत्यपि वदन्ति ॥ ८२ ॥

**समावर्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः ।**
**दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ८३ ॥**

भा०-॥ समावर्त इति। समतया आ समन्ताद्वर्तत इति समावर्तः॥ अनिवृत्त आत्मा देहो यस्य सोऽनिवृत्तात्मा। निवृत्तात्मेति च्छेदे नि नितरां वृत्तः सकलविषयेषु प्रवृत्तः। अयोग्यकृतयज्ञादिभ्यो निवृत्तो वा आत्मा मनो यस्येत्यर्थः॥ दुर्जयो जेतुं न शक्यः। दुःखं दुरिति सम्प्रोक्तमिति गीतातात्पर्योक्तेः, दुःखस्य जयो यस्मादिति वा॥ पूर्वोक्तरीत्या दुःखस्यातिक्रमो यस्य स दुरतिक्रमः॥ दुःखेन लभ्यत इति दुर्लभः॥ गन्तुमशक्यत्वाद्दुर्गमः। अदुर्गमेति च्छेदे न विद्यते दुर्गा तदभिमन्यमानतमो येषां तेऽदुर्गाः। अभिमान्यभिमानयोरैक्यव्यपदेशः महतश्चतुर्मुखादित्यादौ दृष्टतमोगुणरहितास्तैर्मीयत इति तथा॥ दुर्गो दुःखं गमयति दैत्यान्प्रतीति तथा॥ ७८०॥ दुर्दुष्टो रावो ध्वनिर्नैर्गुण्यादिप्रतिपादको येषां ते दुरावाः। अन्तर उपपत्तेरित्यत्रेव दीर्घाभावः। दुरावानस्यति क्षिपति तमसीति दुरावासः॥ दुष्टा आ सम्यगरयो दुरारयस्तान् हन्तीति दुरारिहा॥ ८३॥

**शुभाङ्गो लोकसारंगः सुतन्तुस्तन्तुवर्धनः।**
**इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः॥ ८४॥**

भा०-॥ शुभाङ्ग इति। शुभान्यङ्गानि यस्य स शुभाङ्गः॥ लोकं वैकुण्ठादिलोकं सनोति ददातीति लोकसाः।

लोकशब्दोपपदात् षण् दान इत्यतो वनषणक्रमगमो विडिति सवर्णदीर्घे च रूपम्। रज्यन्ते ज्ञानिनोऽत्रेति रङ्गः । लोकसाश्चासौ रङ्गश्चेति लोकसारङ्गः। लोकसारं स्वात्मानं गमयतीति वा। लोकसार इत्यर्थे बिन्दुराधिक्येऽधिकमिति सूत्रात् । शोभनस्तन्तुश्चतुर्मुखादिसन्तानो यस्य स सुतन्तुः ॥ तन्तूंस्तन्त्वात्मकपटान् वर्धयति द्रौपद्यर्थमिति तन्तुवर्धनः ॥ इन्द्रस्य कर्म वृत्रहननादिव्यापारो यस्मादितीन्द्रकर्मा । इन्द्रमदर्शमिति तस्मादिन्द्रो नामेत्यादिखण्डभाष्ये। गुणपूर्णस्वरूपस्य स्वापरोक्ष्येण दर्शनात् । सर्वदैव ह्यसौ विष्णुरिन्द्रो वै नामतो मतः । ब्रह्मादीनां हि सर्वेषां तत्प्रसादेन जायते। जानन्ति न स्वतस्त्वेन तत्रेन्द्रास्ते प्रकीर्तिताः । रमाऽपि तत्प्रसादेन जानाति किमुतापरे । अल्पज्ञाना अल्पगुणा अल्पानन्दाश्च तेऽखिलाः। रमाऽजशङ्करेन्द्राद्यास्तेनानिन्द्राः क्रमेण तु । पापैरज्ञाततां देवा मानयन्ति सदात्मनः । हर्षेण तेन विष्णुः स इन्द्र इति शब्द्यते । तेनेन्द्रता सुरादीनां ज्ञायतेति श्रुतिर्हरिम् । इन्द्र इत्येव वदति पारोक्ष्येणोरुसद्गुणमित्याद्यैतरेयसंहितायाम् । मुख्यतः कर्मनामा तु प्रादुर्भावात्मको हरिः। अनिरुद्धतनुश्चैव तत्र ह्यमितचेष्टित इति वचनादिन्द्रश्चासौ कर्म चेतीन्द्रकर्मा । महज्जगत्सर्जनादिकर्म यस्येति महाकर्मा। करोऽस्मिन्मीयत इति कर्म जीव उदाहृतः। विधिशब्देनामितत्वादकर्मा भगवान्हरिरित्युक्तेः। कर्मा जीवो न भवतीति वा। विध्यविषयत्वाद्वा । महांश्चासावकर्मा चेति

महाकर्मा ॥ कृतकर्मा पूर्णकर्मा ॥ कृतागमः कृत आगमो येन स तथा ॥ ७९० ॥ ८४ ॥

**उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।**
**अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥**

भा० –॥ उद्भव इति । भवात्संसारादुत्पत्तेर्वोद्गत उद्भवः ॥ सुन्दरः सौन्दर्यवान् । शोभनं दरः शङ्खो यस्येति वा । बिन्दुस्त्वाधिक्यार्थे । सुन्दमुपसुन्देन रेपयति नाशयतीति वा ॥ सुं सुखं ददातीति सुन्दः ॥ रत्ननाभो रत्नं पुंरत्नं चतुर्मुखो नाभौ यस्य । अरत्ननाभ इति च्छेदे अरत्नान् अरतिदैत्यान्नभत इति वा । नभ हिंसायामिति धातोः ॥ शोभने लोचने यस्य स सुलोचनः । सुष्ठु लोचनं यस्यासौ तथा वा ॥ अर्कोऽतिशयेन सुखरूपः । अर्च्यते पूज्यत इति वाऽर्कः । अर्च पूजायाम् ॥ यद्वा अर्कस्तवनेऽर्क्यत इत्यर्कोऽर्च्यत इत्यर्कः ॥ वाजमन्नं सनति सम्भजत इति वाजसनः । वन षण सम्भक्तौ ॥ शृङ्गाणि गोवर्धनशृङ्गाण्यस्य सन्तीति शृङ्गी ॥ जयतीति जयन्तः । सर्वा च सा विच्च सर्ववित् । सर्वविदो जयप्राप्तिरस्यास्तीति सर्वविज्जयी ॥ ८५ ॥

**सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।**
**महाह्रदो महागर्तो महाभूतो महानिधिः ॥८६॥**

भा०-॥ सुवर्णबिन्दुरिति । शोभना वर्णा यस्मिन्स सुवर्णो वेदस्तस्य बिन्दुर्ज्ञाता ॥ अक्षोभ्यः क्षोभयितुमशक्यः । सुवर्णस्थबिन्दवो यस्मिंस्तत्सुवर्णबिन्दु सुवर्णबिन्दुवद्रक्षश्च सुवर्णबिन्दुरक्षो मारीचः । मायामृगात्मा मारीचो रम्ये रामाश्रमेऽचरत् । मुक्ताप्रवालप्रच्छन्नो हेमबिन्दुशताञ्चित इति संग्रहरामायणोक्तेः । तं भ्यासयति भीषयतीति वा तथा । भ्यस भय इति धातोर्ण्यन्ताड्डः ॥ ८०० ॥ सर्वेषां वाचः सर्ववाचस्तासामीश्वरस्य रुद्रस्य चेश्वरत्वात्सर्ववागीश्वरेश्वरः ॥ महान् ह्रदो यस्य कालीयमर्दनकाले वा समुद्रशयनकाले वा स महाह्रदः ॥ महान्तश्च तेऽगाश्च महागाः शेषाचलादयस्तत्र ऋच्छतीति महागर्तः । ऋ गतौ कर्तरि क्तः । महान्गर्तो हृदयगुहालक्षणो यस्येति वा ॥ महान्ति भूतान्याकाशादीनि यस्मादिति महाभूतः ॥ स्वप्राप्त्या निधिवत्सन्तोषकरत्वान्महानिधिः ॥ ८६ ॥

## कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः ।
## अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥

भा० -॥ कुमुद इति । कौ मोदत इति कुमुदः ॥ भक्तसमर्पितकुन्दपुष्पेण रमत इति कुन्दरः ॥ कुं शब्दं करोतीति कुन्दः । कु शब्द इत्यतः । कुं भूमिमिन्द्राय ददातीति वा । कुं कुत्सितं द्यति खण्डयतीति वा ॥ पर्जन्यः परं जन्यं यस्मात् ॥

पुनातीति पावनः। पान्तीति पा राजानस्तेषामवनं यस्मादिति वा। पवनस्य वायोरयं पिता पावन इति वा॥ ८६॥ अनिलोऽनो मुख्यप्राणो येषामस्तीत्यनिनो वायुभक्तास्तान् लाति गृह्णातीति तथा॥ अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृत इत्युक्तेः, अमृतस्य वायोः आ सम्यक् शं सुखमाशा तन्नाम्नी भारती वा यस्मादित्यमृताशः। प्रद्युम्नतः कृतौ यज्ञे कन्यानां तु चतुष्टयम्। गायत्री चैव सावित्री श्रद्धा चैव सरस्वती। श्रद्धा सूत्रस्य भार्याऽभूत्तिस्रस्तु पुरुषस्त्रिय इति वाराहपुराणोक्तेः। अमृतानां मुक्तानामाशा इच्छा यस्मिन्विषय इति वा। अमृतांश इति पाठेऽमृता मरणरहिता अंशा मत्स्याद्या यस्य सोऽमृतांशः॥ अमृतवपुरमृतार्थं वपुर्नारायणीरूपमजितनामकरूपं धन्वन्तरिरूपं वा यस्य स तथा। सर्वज्ञः सर्वविषयकज्ञानवान्॥ सर्वदिक्षु मुखवत्त्वात्सर्वतोमुखः। विश्वतश्चक्षुरिति श्रुतेः। आश्रयतया सर्वतोमुखं जलमस्यास्तीति वा। अर्शआद्यच्॥ ८७॥

**सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः।**
**न्यग्रोध उदुम्बरोऽश्वत्थश्चाणूरान्धनिषूदनः॥**

भा०—॥ सुलभ इति। सुरेषु भातीति सुलभः। सु सुखं लभत इति वा॥ शोभनं व्रतं यद्विषय इति सुव्रतः॥ सिधं मङ्गलं शास्त्रं वा धत्त इति सिद्धः॥ शत्रूञ्जयतीति

शत्रुजित् ॥ शत्रूंस्तापयतीति शत्रुतापनः। तपनस्य सूर्यस्यायमन्तर्यामी तापनः। ध्येयः सदा सवितृमण्डलमध्यवर्तीत्युक्तेः। शत्रुर्दैत्यानां शातयिता, शत्रुश्चासौ तापनश्चेति वा ॥ ८२० ॥ सर्वाणि भूतानि न्यक्कृत्य रोहति वर्धत इति न्यग्रोधः। उदुम्बरोऽम्बरादुद्गतः। यद्वा औदुम्बर इति पाठे उदुं जीवं वरयति भक्तत्वेन स्वीकरोतीत्युदुम्बरा लक्ष्मीस्तस्या अयं स्वामी औदुम्बरः। आम्रं बाल्येऽपि पाति परिणामे ह्युदुम्बरम्। सम्यक् पाके तथाऽश्वत्थं फलं जीवमृतिस्तथा। कलावाम्रोपमा जीवास्त्रेतास्वौदुम्बरोपमाः। कृतेऽश्वत्थसमाश्चैव यान्ति ब्रह्मवशाः सदेति बृहद्भाष्योक्तेः। उदुम्बरसमजीवप्राप्यत्वाद्वा ॥ अश्ववत्तिष्ठतीत्यश्वत्थः॥ चाणूरान्धनिषूदनोऽन्धस्येमेऽन्धा दुर्योधनादयः। चाणूरश्चान्धाश्च तान्निषूदयतीति तथा। मया हतांस्त्वं जहि मा व्यथिष्ठा इति गीतोक्तेः ॥ ८८ ॥

**सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः।**
**अमूर्तिरनघोऽचिन्त्योऽभयकृद्भयनाशनः ॥८९॥**

भा०-॥ सहस्रार्चिरिति। सहस्रमर्चींषि यस्य स सहस्रार्चिः ॥ सप्तसङ्ख्याका जिह्वा यस्याग्न्यन्तर्गतरूपेण सप्तजिह्वः। सप्तभिर्जटाभिः सहितास्सप्त तपस्विनस्त एव जिह्वा अस्येति वा। नाहं तथाऽद्मि यजमानहविरिति भागवतोक्तेः ॥

सप्त ऋषीन् एधयति वर्धयतीति सप्तैधाः। एध वृद्धौ। सप्त एधांसि यस्याग्न्यन्तर्गतरूपेण सप्त ते अग्ने समिध इति श्रुतेः॥ सप्तवाहनः सप्त वाहा अश्वा यस्य सः सप्तवाहः सूर्यस्तं नयतीति तथा॥ अमूर्तिः प्राकृतदेहरहितः॥ अनघः पापशून्यः॥ अचिन्त्यश्चिन्तितुमशक्यः॥ अभयकृद्भक्तानामभयप्रदः॥ भयनाशनो भयपरिहारकः॥ ८९॥

**अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान्।**
**अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः॥**

भा०–॥ अणुरिति। अणुत्वविश्रान्त्यधिकरणत्वादणुः॥ बृहद्गुणैर्वृद्धः। दैत्यान्कर्शयतीति कृशः॥ स्थूलो महापरिमाणः॥ गुणानानन्दादीन् बिभर्तीति गुणभृत्। गुणानप्रधानभूतजीवान् बिभर्तीति वा॥ सत्त्वादिगुणरहितत्वान्निर्गुणः॥ महान् श्रेष्ठः॥ अधृतः केनापि धृतो न भवतीति तथा॥ स्वेनैव धृतत्वात्स्वधृतः। स्वं धनं धृतं येनेति वा॥ ८४०॥ स्वं स्वरूपभूतमास्यं यस्य स स्वास्यः। सु शोभना वेदा आस्ये यस्येति वा॥ प्राग्वंशोऽनादिकालमारभ्य वंश इवाधारः॥ वंशवर्धनः परीक्षित्संरक्षणेन पाण्डुकुलं वर्धयतीति तथा। तदुक्तं भागवते— जुगोप कुक्षिगत आत्तचक्रो मातुश्च मे यः शरणं गताया इति॥ ९०॥

**भारभृत्कथितो योगी योगीशः सर्वकामदः ।**
**आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥**

भा०-॥ भारभृदिति । भारं भारभूतं ब्रह्माण्डं कूर्मरूपेण बिभर्तीति भारभृत् । बिभर्त्यण्डं हरिः कूर्मस्त्वण्डे चाप्युदकं महदिति बृहद्भाष्योक्तेः । कथितः सदागमैः प्रतिपादितः ॥ योगी उपायवान् ॥ योगीशो योगिनामीशः । योगिनां या रमायाश्च शं सुखं यस्मादिति वा ॥ सर्वान्कामान्काम्यान्ददाति भक्तेभ्य इति सर्वकामदः । सर्वो रुद्रः कामदः कामखण्डको यस्मादिति वा ॥ न विद्यते श्रमो येषां तेऽश्रमा मुक्तास्तेषामयं स्वामीत्याश्रमः ॥ श्रमणाः सन्न्यासिनोऽस्य दासत्वेन सन्तीति श्रमणः । अशं आद्यच् कृच्छ्रचान्द्रायणादिश्रमेण णः सुखं यस्मादिति वा । श्रमं नयत्यपनयतीति वा ॥ ८५० ॥ क्षमायाः सहनशक्तेरयमाधारत्वेनेति क्षामः । क्षामयति प्रलये जनानिति वा ॥ शोभनं पर्णं वटपत्रं शय्यात्वेन यस्य स सुपर्णः सुपर्णरूपो वा । द्वा सुपर्णा सयुजेति श्रुतेः ॥ वायुं वर्तयतीति वायुवः । वृतु वर्तन इत्यतो डः । अह व्याप्तौ ल्युट् । अन्हुत इत्यहनः । वायुवश्चासावहनश्चेति वायुवाहनः । शरीरादुत्क्रमणकाले वायुर्वाहनं यस्येति वा ॥ ९१ ॥

धनुर्धरो धनुर्वेदो दण्डो दमयितादमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः ॥

भा०-॥ धनुर्धर इति । धनुषो धरो धनुर्धरः ॥ ऐन्द्रं धनुरगस्त्यद्वारा विन्दत इति धनुर्वेदः ॥ दैत्यान्दण्डयतीति दण्डः । अदण्ड इति च्छेदेऽन्यकर्तृकशिक्षणरहित इत्यर्थः ॥ दैत्यान्दमयतीति दमयिता ॥ सम्यग्ददतीत्यादास्तेषां मा सम्पद्यस्मादित्यादमः । अदम इति च्छेदे न विद्यते इन्द्रियनिग्रहः कृष्णादिरूपे यस्येत्यदम इति वदन्ति ॥ न विद्यते पर उत्तमो यस्मादित्यपरः । अपरश्चासावजितश्चापराजितः । न विद्यते पः पालको यस्य सोऽपः । स चासौ राजितश्चेत्यपराजितः ॥ सर्वं सहत इति सर्वसहः ॥ नियन्ता नियामकः ॥ ८६० ॥ नियमो नितरां यमः शासकः । यम उपरम इति धातोर्यमयति उपरमयति प्रलये सर्वमिति यमः ॥ ९२ ॥

सत्त्ववान्सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ॥

भा०-॥ सत्त्ववानिति । सत्त्वमस्त्री तु जन्तुष्विति नामानुशासनात् , सत्त्वं जीवः क्वचित्प्रोक्तः क्वचित्सत्त्वं जनार्दनः । सत्त्वं नाम गुणः क्वचित्क्वचित्साधुत्वमुच्यत इति

स्मृतेश्च , जीवपरत्वात्सत्त्वं जीवो बलं साधुत्वं वाऽस्य सन्तीति तथा ॥ सत्त्वसत्त्वमहासत्त्वसूक्ष्मसत्त्वश्चतुर्मुख इत्युक्तेः । शुद्धसत्त्वप्रधानश्चतुर्मुखो दासत्वेनास्यास्तीति सात्त्विकः ॥ सत्यः स्वतन्त्रः । तथा कर्मनिर्णयटीकोक्तेः । सन्ततेर्यातनाच्चैव ह्यप्राप्यत्वाच्च दुर्जनैः । नित्यसाधुगुणव्याप्तियन्तृरूपत्वतः सदा । जगद्गतेन रूपेण ब्रह्मैव हि तथोच्यत इति अनुव्याख्यानावसरे सन्ततेः सम्यग्व्याप्तेर्यातनाद्यतनं प्रति हेतुत्वाच्च सत्यम् । तथा नित्यसाधुगुणव्याप्तियन्तृरूपत्वतः सत्यम् ॥ सत्यविषये धर्मो येषां ते सत्यधर्मास्तेषां परायणं मुख्याश्रयः सत्यधर्मपरायणः । अभितः प्रति पूरयतीत्यभिप्रा रमा । प्रा पूरणे । प्रापयति तोषयतीत्यभिप्रायः । प्रियं सुखविशेषमर्हतीति प्रियार्हः ॥ अर्हः पूज्यः । अर्ह पूजायामिति धातोः ॥ परेयं प्रियनामकमिति तैत्तिरीयभाष्योक्तेः प्रियं सुखविशेषं करोतीति प्रियकृत् ॥ ८७० ॥ प्रीतिं भक्तेषु वर्धयतीति प्रीत्या भक्तान्वर्धयतीति वा प्रीतिवर्धनः ॥ ९३ ॥

**विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।**
**रविर्विरोचनः सूर्यः सविता रविलोचनः ॥ ९४ ॥**

भा०-॥ विहायसेति । विहायसो गरुडस्तेन गतिर्यस्य स तथा ॥ ज्योतिर्दीप्तः । अनुव्याख्याने जातमोतं हरौ यस्मा-

ज्ज्योतिरित्युक्तम् ॥ सुरुचिः शोभना रुचिर्यस्य ॥ हुतं भुङ्क्त इति हुतभुक् ॥ विशिष्टा भवन्त्यस्मादिति विभुः ॥ स्वज्ञेयत्वतो रविरिति गीतातात्पर्योक्तेरविज्ञेयत्वाद्रविः । सर्वे वेदाः सर्वे घोषा एकैकव्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यादिति श्रुतेः ॥ विशिष्टं लोचनं पार्थस्य यस्मात्स विलोचनः । दिव्यं ददामि ते चक्षुरित्युक्तेः । विशिष्टानि रोचनानि सूर्यादिप्रकाशा यस्मादिति वा । रोचन्ते रोचना दिवीति श्रुतेः ॥ सूर्यः सरतीति तथा । सृ गतौ । सुवति कर्मणि प्रेरयति लोकानिति वा । षू प्रेरणे । सूरिगम्यत्वाद्वा सूर्यः । सूर्यः स सूरिगम्यत्वादित्युक्तेः ॥ स्रष्टृत्वात्सविता विष्णुरित्युक्तेः सविता स्रष्टा ॥ ८८ ॥ रविः सूर्यो लोचने यस्य स रविलोचनः । अरविलोचन इति च्छेदेऽरमत्यन्तं विले ओचनम् । उच समवाय इत्यतः सम्बन्धः यस्य नृसिंहादिरूपेण स तथा । तदुक्तं छान्दोग्यभाष्ये—कक्षश्वभ्रे नृसिंहस्य सदावस्थितिकारणात् । द्रवन्ति कक्षश्वभ्राभ्यां तदज्ञाने विरक्षणात् । मृगा भीता यतस्तेषां नृसिंहः स्वाश्रयः सदेति । विलोचन इत्यत्र गुणोतताम् , तदोकोग्रज्वलनमित्यादाविव ओमाङोश्चेत्यत्र चशब्देन पररूपत्वानुशासनाद्वृद्ध्यभावेऽपि न क्षतिः ॥ ९४ ॥

**अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः ।**
**अनिर्विण्णः सदाऽमर्षी लोकाधिष्ठानमद्भुतः ॥**

भा०—॥ अनन्त इति । न विद्यते अन्तो बन्धो यस्य सोऽनन्तः । अति बन्धने । न विद्यतेऽन्तो नाशो यस्येति वा ॥ हुत आहुतः सन्भुङ्क्त इति हुतभुक् ॥ भोक्ताऽभ्यवहर्ता ॥ सुखं ददातीति सुखदः । शोभनानीन्द्रियाणि ददातीति वा ॥ नैकजो नि नितरां के जायन्त इति कजानि कमलानि यस्याः सा निकजा रमा तस्या अयं स्वामी। नितरां कजानि यस्मिंस्तद्वनं निकजं तत्र भवो नैकज इति वा । तुलसीकाननं यत्र यत्र पद्मवनानि च। वसन्ति वैष्णवा यत्र तत्र सन्निहितो हरिरित्युक्तेः। एकस्मादपि न जातो नैकज इति वा ॥ अग्रे सृष्टेः प्राक् जायते व्यज्यत इत्यग्रजः ॥ अनिर्विण्णः ॥ श्रान्तो न भवतीति वा, जगत्सृष्ट्यादौ विरक्तो न भवतीति वाऽनिर्विण्णः ॥ सदाऽमर्षः कोपो दैत्येष्वस्यास्तीति सदाऽमर्षी । सत्सु सज्जनविषये आ सम्यक् मृष्यते क्षमत इति वा । सदामा पाशी वरुणस्तं प्रति नन्दगोपसंरक्षणार्थंमृषति गच्छतीति वा ॥ लोकाधिष्ठानं जगदाश्रयः ॥ ८९० ॥ अद्भुत आश्चर्यरूपः ॥ ९५ ॥

**सनात्सनातनतमः कपिलः कपिरव्ययः ।**
**स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक्**
**स्वस्तिदक्षिणः ॥ ९६ ॥**

भा०—॥ सनादिति । सनात् सनं लाभमातयति

गमयतीति सनात् ।। अतिशयेन सनातनः सनातनतमः । सनं लाभमतन्ति गच्छन्तीति सनाताः नता मा रमा यैस्ते नतमाः । सनाता नतमा यस्मादिति वा ।। कपिं हनुमन्तं लात्याद्त्त इति कपिलः । गीताभाष्ये तु — सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः । पीतिः सुखं कमानन्द इत्यभिधानात् । प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति च । ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् सुखादनन्तात्पालनाच्च यं वै देवं कपिलमुदाहरन्तीति च बाभ्रव्यशिखायामिति व्याख्यातः । तत्र टीका — सुखरूप इति कः पाल्यते जगदनेनेति पिः पा रक्षण इत्यतः पिः । लीयते जगदनेनेति लः । ली श्लेषण इत्यस्माड्डः । ला आदान इत्यतो वा कः । ततः कर्मधारय इति वा । गीतातात्पर्ये तु — सुखं पिबल्लीलयैव कपिल इत्युक्तम् । कं सुखं पिबतीति कपिः ।। अप्येति जगदस्मिन्प्रलये इत्यप्ययः । अव्यय इति पाठेऽव्या रक्षणीयास्तान्याति गच्छतीत्यर्थः ।। भक्तेभ्यः स्वस्ति मङ्गलं ददातीति स्वस्तिदः ।। सु शोभना अस्तेरित्यसधातोः । ईक्षतेर्नाशब्दम् । अक्तिमङ्गाङ्गनेतृता-मित्यादिवत् शितपा निर्देशः । लक्षणयाऽस्ति सत्ता तां करोतीति स्वस्तिकृत् ।। सु अत्यन्तमस्ति सकलदेशकालेषु वर्तत इति स्वस्ति । सुबन्तस्य तिङन्तेन समासः । सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा । सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैरित्युक्तेः । स च स्वान स्वस्तय इति ऋग्भाष्य-

व्याख्यावसरे टीकायां स्वस्तय इति सुपूर्वकं सत्तावाचि विभक्ति-प्रतिरूपकमव्ययम् । सत्तावाचिनां सौख्यवाचित्वमपि सद्भाव-वाचिनः शब्दाः सर्वे ते सुखवाचका इति प्रमाणसिद्धमित्युक्तेः स्वस्तिसुखरूप इति वा ॥ स्वस्ति सुखं भोजयतीति स्वस्तिभुक् ॥ ९०० ॥ अस्तिक्षीरा गौरितिवत् सु सम्यगस्ति दक्षिणा तन्नाम्नी रमा यस्य सः स्वस्तिदक्षिणः । दक्षभागस्थितत्वाच्च दक्षिणा नाम चोच्यते । तस्या अयनो हि विष्णुः स दक्ष-भागस्थितः सदेत्यैतरेयभाष्योक्तेः । स्वस्ति मङ्गलप्रदाने कुशल इति वा ॥ ९६ ॥

**अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।**
**शब्दातिगः शब्दसहः शिशिरश्शर्वरीकरः ॥**

भा०-॥ अरौद्र इति । अरौद्रोऽक्रूरः ॥ कुण्डली मकर-कुण्डलवान् ॥ चक्री सुदर्शनवान् ॥ विक्रमी पराक्रमशाली ॥ ऊर्जितशासन ऊर्जितं शासनं यस्येति तथा । एकः शास्तेति एतस्य वा अक्षरस्य प्रशासने गार्गीति श्रुतिः ॥ शब्दातिगः शब्दमतिक्रम्य वर्तमानः । यतो वाचो निवर्तन्त इति श्रुतेः । अद्भुतत्वादवाच्यं तदित्युक्तेश्च ॥ भृग्वादिभक्तकृततर्जनरूप-शब्दं तदुपलक्षितताडनादिकं सहत इति शब्दसहः । शिशिरः शशिनोऽत्यन्तसुखिनस्तत्र रमत इति तथा । यद्वा शश प्लुतगतौ

शशन्ति धावन्त्येनमिति शिशिरः। शशिर इति पाठे शशिनि चन्द्रे रमत इति वा। शृ हिंसायां शृणाति दैत्यानिति वा। शर्वरीकरः शर्वर्यां रात्रौ कराः किरणा यस्य चन्द्रान्तर्गतरूपेणेति। शर्वरीं रात्रिं करोतीति वा। सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधीति श्रुतेः ॥ ९१० ॥ ९७ ॥

**अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।**
**विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ ९८ ॥**

भा०-॥ अक्रूर इति । क्रूरो न भवतीत्यक्रूरः । अक्रूरप्रियत्वाद्वा, तत्प्रियत्वात्ताच्छब्द्यम् ॥ पेशलो मनोहरः । ईशं रुद्रं लाति भक्तत्वेन गृह्णातीतीशलः पातीति पः पश्चासावीशलश्चेति वा ॥ दक्षः समर्थः। दक्ष गतिहिंसयोरिति धातोर्गन्ता, शत्रूणां हन्ता वा ॥ दक्षिणः कुशलः। उदारो वा, दक्षिणे सरलोदारावित्यभिधानात् । दक्ष वृद्धौ शीघ्रार्थे चेति अभिवृद्ध इति वा ॥ क्षमिणां वरः क्षमावतां श्रेष्ठः ॥ विद्वत्तमोऽत्यन्तज्ञानी ॥ वीतभयो भयशून्यः ॥ पुण्ये श्रवणकीर्तने यस्य विषये सः पुण्यश्रवणकीर्तनः ॥ ९८ ॥

**उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।**
**वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥**

भा०-। उत्तारण इति । उत्तारयतीत्युत्तारणः । उत्कृष्टस्तारः प्रणवो येषां त उत्ताराः सन्न्यासिनस्तेषां णः सुखं यस्मादिति वा ।। दुष्कृतमेषामस्तीति दुष्कृतिनः पापिनस्तान्हन्तीति दुष्कृतिहा ।। ९२० ।। पुण्यमाचष्टे पुण्यः तत्करोति तदाचष्ट इति णिच् ।। दुःस्वप्ननाशनो दुःस्वप्नान्नाशयतीति तथा ।। वि विशेषेण इरा मद्यं पेयत्वेन येषां ते वीरास्तान्हन्तीति वीरहा ।। रक्षतीति रक्षणः । अत्यन्तं क्षण उत्सवो यस्येति वा । सन्तः संपूर्वात्तनोतेर्डः व्याप्तः । सन्त इति बहुरूपविवक्षया बहुवचनान्तो वा निर्दुष्टो वा सर्वत्र विद्यमानो वा ।। जीवयतीति जीवनः ।। रक्षणार्थादवतेर्भावेऽचि परितः सर्वत्रावाय रक्षणाय स्थितत्वात्पर्यवस्थितः ।। ९९ ।।

## अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
## चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥

भा०-।। अनन्तेति । अनन्तान्यपरिमितान्यनाशानि वा रूपाणि यस्य सोऽनन्तरूपः ।। अनन्तश्रीरनन्ता नाशरहिता श्रीः स्वरूपश्रीर्यस्य स तथा । स्वरूपश्रीस्तथा भार्या द्वेधा श्रीस्तु हरेर्मतेति भागवततृतीयतात्पर्योक्तेः ।। जितमन्युर्दैत्यविषये जितः प्राप्तो मन्युर्येन स तथा । जिताः प्राप्ता मन्यवो यज्ज्ञानेनेति वा ।। ९३० ।। भयापहो भयान्यपहन्तीति तथा ।।

चतुरस्रः स्रृ गतौ ततः कः चतुरः कुशलश्चासौ स्रो गन्ता चेति तथा ॥ गभीर आत्मा मनो यस्य स गभीरात्मा । अगेन गोवर्धनेन भियं वृष्टिभयं रेपयति नाशयतीति, अगाभ्या-मर्जुनवृक्षाभ्यां भियमुत्पाटनभियं राति ददातीति वा, अगभीरः स चासावात्मा चेत्यगभीरात्मा ॥ विदिशो विदि ज्ञानिनि शं सुखं यस्मात्स विदिशः । विदामीशे विस्मयसुखे यस्मादिति वा ॥ विर्गरुड एव आदिर्येषां ते व्यादयस्तेषां शं यस्मात्स व्यादिशः । विशेषेणादिशत्याज्ञापयतीति वा । दिशो दिङ्नामानश्चेह प्रोक्ता धर्मज्ञानातिदेशनादिति छान्दोग्यभाष्योक्तेर्धर्मादिदातारः । बहु-रूपत्वाद्बहुवचनम् । दिश् अतिसर्जने ॥ १०० ॥

**अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।**
**जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥**

भा०-॥ अनादिरिति । अनो मुख्यप्राण आदीयते भक्तोत्तमत्वेनोपादीयते येन सोऽनादिः ॥ पूर्णत्वाद्भूः ॥ जगत्कारणत्वाद्भुवः । तदुक्तमनुव्याख्याने—व्याहृतीनां च भूमतो भावनाच्चैवेति । तत्र सुधा—भूमा पूर्णत्वं ततो भूः ॥ भवतेर्बहुत्वार्थस्य क्विपि रूपमेतत् । भावनाज्जगदुत्पादनाद्भुवः ॥ भवतेरन्तर्णीतण्यर्थस्य कप्रत्यये रूपमिति ॥ लक्ष्मीः । लक्षेर्मुट् लक्ष दर्शनाङ्कयोरित्यत ईप्रत्ययः मुडागमश्च । लक्षयति पुण्यकृतो

लक्ष्यते वा पुण्यकृद्भिरिति तथा ॥ ९४० ॥ सुवीरः सुष्ठु विशिष्ट ईरो मुख्यप्राणो येन स तथा ॥ रुचिराङ्गदो रुचिरं मनोहरमङ्ग स्वरूपदेहं ददातीति तथा । मनोहरबाहुभूषणो वा । अरुचिरममनोहरं लिङ्गदेहं द्यति खण्डयतीति वा ॥ जनयतीति वा जनं नयतीति वा जननः ॥ जनानां जन्मादिर्यस्मादिति जनजन्मादिः ॥ भीमो भयङ्करः प्राणधारको वा । भूतमो भीम इत्युक्तेः ॥ भीमपराक्रमो भीमस्य द्रौपदीपते रुद्रस्य वा पराक्रमो यस्मात्स तथा ॥ १०१ ॥

**आधारनिलयो धाता पुष्पहासः प्रजागरः ।**
**ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥**

भा०—॥ आधारेति । आधारनिलयो न विद्यते धारो धारको येषां तेऽधारा दैत्यास्तेषां समूह आधारं तस्य निरयो नरकः । आ समन्ताद्धारा देवेन्द्रकृतवृष्टिधारा येषां त आधारा गोपालास्तेषां गोवर्धनधारणेन निलय आश्रय इति वा ॥ धाता धारणपोषणकर्ता ॥ पुष्पहासः कुन्दपुष्पवद्धासो यस्य स तथा ॥ प्रकर्षेण जागर्तीति वा, प्रजाः सृष्टिकाले गिरतीति वा प्रजागरः । प्रकर्षेण जनयति लोकानिति प्रजोऽगेषु वेङ्कटादिपर्वतेषु रमत इत्यगरः प्रजश्चासावगरश्चेति वा ॥ ९५० ॥ ऊर्ध्वग ऊर्ध्वेषु वैकुण्ठादिषु तिष्ठतीति वा, ऊर्ध्वान्वैकुण्ठादीन्गमयतीति वा ॥

सत्पथेषु नक्षत्रादिषु आ सम्यक् चरति चन्द्राद्यन्तर्गतरूपेणेति सत्पथाचारः । सत्पथे सन्मार्गे आचारयति योग्यानिति वा ॥ प्रकर्षेणाणं गतिं ददातीति प्राणदः । अण रण वण भण मण कण क्वण व्रण भ्रण ध्वण शब्दार्था इति धातुव्याख्यानात् प्रकर्षेणाणं तेजआदिरूपं शब्दं ददात चतुर्मुखायेति वा ॥ प्रणवश्चतूरूपस्य विष्णोर्नाम प्रणव इत्यपि । जाग्रदादि प्रणयनात् इत्युक्तः प्रणयनात्प्रणवः । यद्वा प्रकर्षेण णः सुखं येषां ते प्रणाः मुक्तास्तान्वर्तयतीति प्रणवः ॥ पणः पण्यते जनैः स्तूयत इति वा व्यवहरतीति वा तथा । पण व्यवहारे स्तुतौ चेत्युक्तः ॥

**प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः ।**
**तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥**

भा०-॥ प्रमाणमिति । प्रकृष्टं मानं ज्ञानं यस्य तत्प्रमाणम् । यद्वा माङ् मान इति धातोर्भावे ल्युटि प्रमितिः प्रमाणं विज्ञानमानन्दं ब्रह्मेति श्रुतेः । अथवैतस्मादेव करणे ल्युटि प्रमीयतेऽनेन चक्षुराद्यन्तर्गतेनेति प्रमाणम् । यश्चक्षुरन्तरो यमयति यः श्रोत्रमन्तरो यमयतीत्यादिश्रुतेः । यद्यपि ल्युट् भावकरण-योरिवाधिकरणेऽपि स्मर्यते, तथाऽपि तत्र प्रमाणशब्दस्याभिधाना-भावान्न तत्र वृत्तिः । कृत्तद्धितसमासानामभिधानाधीनत्वात् । नन्वस्ति विप्राः प्रमाणमधिकरणे विप्रयोगः । मैवम् । विप्राणां

प्रमायां स्वातन्त्र्येण कर्तॄणामधिकरणत्वाभावात् । न हि क्रिया-धारोऽधिकरणं किन्नाम कर्तृकर्मणोः । क्रियाश्रययोर्धारणक्रियां प्रति य आधारस्तत्कारकं तस्मात्तदीयविज्ञानस्य वाक्यस्य वा प्रामाण्या-द्विप्राः प्रमाणमित्युपचर्यते ॥ प्राणनिलयः प्राणस्य वायोर्निलयः आश्रयः । प्राणभृत् प्राणानीन्द्रियाणि बिभर्तीति वा ॥ प्राणेन मुख्यप्राणेन जीवयति जनानिति प्राणजीवनः ॥ तत्त्वमना-रोपितस्वरूपं, वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् । ब्रह्मेति परमात्मेति भगवानिति शब्द्यत इति भागवतोक्तेः । गुणैस्तत-त्वात्तत् । गुणैस्ततः प्रसवितेत्यादेः । तृ च तत्र वश्चेति त्वम् । ततो वेत्तीति च त्वं स इत्यैतरेयभाष्योक्तेः । तच्च तत् त्वं चेति तत्त्वम् । चतुर्थतात्पर्ये तु तत्त्वं नरेन्द्र जगतामथ तस्थुषां चेति श्लोकव्याख्यानावसरे सर्वसत्ताप्रदत्वात्तु सर्वतत्त्वं हरिः स्मृतः । सर्वत्र विदितत्वाद्वेत्युक्तम् ॥ ९६० ॥ तत्त्वं स्वस्वरूपं वेत्तीति तत्त्ववित् ॥ एक आत्मा मुख्यस्वामी । जन्ममृत्युजरातिगो जननमरणजरास्तदुपलक्षितयावद्दोषानतिक्रम्य वर्तमानः ॥ १०३ ॥

## भूर्भुवस्स्वस्तरुस्तारः सवि (पि) ता प्रपितामहः । यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥१०४॥

भा०-॥ भूरिति । भूः पूर्णो भू बहौ पूर्णतायाम् । भुव ऐश्वर्येण वरः । स्वोऽनन्तसुखः । तदुक्तमृग्भाष्ये । पूर्णो

भूतिवरोऽनन्तसुखो यद्व्याहृतीरित इति। तत्र टीका—यद्यस्मा-देवमेकार्थस्तस्माद्व्याहृतिरीरितः। स एव प्रणवार्थे व्याहृतय इति वचनात्किं निमित्तं यद्यस्मात्पूर्णो भूतिवरोऽनन्तसुखश्च। यथोक्तम्। वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमिति सु शोभनं वः सुखं यस्य, शोभनता सुखस्यानन्तत्वं अनन्त-सुखत्वात्सुवः। स्वरिति पाठे निरुक्तत्वादुकारलोपः। शब्द-स्वाभाव्यादव्ययत्वम्॥ तरतीति तरुः। तॄ प्लवनतरणयोः। स्वस्तरुरित्येकं वा पदं कल्पवृक्षसदृश इत्यर्थः॥ तार ओंकारः। वाच्यवाचकयोरैक्योपदेशस्तु अयं वै लोकः प्रथमा महानाम्नी-त्यादौ दृष्टः। उपपादितं चैतत्कर्मनिर्णये। प्रथमा या महानाम्नी तद्वाच्यः पार्थिवो हरिः। द्वितीयाया अन्तरिक्ष-स्तृतीयाया द्युगः प्रभुरिति॥ गुणैस्ततः प्रसवितेत्युक्तेः स्रष्टृत्वा-त्सविता॥ लोकपितॄणां मरीच्यादीनां पिता पितामहश्चतुर्मुख-स्तस्य पितृत्वात्प्रपितामहः। सर्वजनोपास्यमूर्तिरियम्। तदुक्तं भागवतदशमतात्पर्ये सप्तविंशेऽध्याये। पतित्वेन श्रियोपास्यो ब्रह्मणा मत्पितेति च। पितामहस्तथाऽन्येषां त्रिदशानां जनार्दनः। प्रपितामहो मे भगवानिह सर्वजनस्येति वाराहे॥ यज्ञभोक्तृत्वाद्यज्ञः। यद्वा जपयज्ञश्चेज्यां तपोयाज्य एव चेति गीतातात्पर्योक्तेर्याज्यत्वाद्यज्ञः॥ ९७०॥ यज्ञानां पालना-त्स्वामित्वाद्वा यज्ञपतिः॥ यष्टृत्वाद्यज्वा॥ यज्ञोद्देश्यत्वा-

यज्ञाङ्गः ॥ यज्ञवाहनो यज्ञं वहन्तीति यज्ञवाहास्तान्नयतीति यज्ञवाहनः ॥ १०४ ॥

**यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।**
**यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ १०५ ॥**

भा०-॥ यज्ञेति । यज्ञं बिभर्तीति यज्ञभृत् ॥ यज्ञं करोतीति यज्ञकृत् । विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चेति श्रुतेः ॥ यज्ञोऽस्यास्तीति यज्ञी ॥ यज्ञं भुङ्क्त इति वा यज्ञं भोजयतीति वा यज्ञभुक् ॥ यज्ञस्य साधनं स्रुक्स्रुवादिकं मन्त्रादिकं वा यस्मादिति यज्ञसाधनः ॥ यज्ञस्यान्तो निर्णयस्तं करोतीति यज्ञान्तकृत् । यज्ञस्यान्तो नाशो येभ्यस्ते यज्ञान्ताः सुबाहुमारीचादयस्तान्कृणोतीति वा ॥ ९८० ॥ यज्ञो गुह्यं विष्णुरिति नाम यस्य तद्यज्ञगुह्यम् । विष्णुरुपांशुर्यष्टव्य इति श्रुतेः । अद्यतेऽत्ति चेति श्रुतेः, सर्वोपजीव्यत्वात्सर्वात्तृत्वादन्नम् ॥ अन्नमत्तीत्यन्नादः । द्विजपत्न्यर्पितमस्ति विभो अन्नमित्युक्तेः ॥

**आत्मयोनिः स्वयञ्जातो वैखानः सामगायनः ।**
**देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥**

भा०-॥ आत्मेति । आत्मा विरिञ्चिः सुमनाः सुधौतश्चेति कथ्यत इति बृहद्भाष्योक्तेरात्मनश्चतुर्मुखस्य जीवानां वा

योनिः कारणमित्यात्मयोनिः। आत्मैव स्वयमेव योनिर्भार्या यस्येति वा स्वरमणत्वात्। स्पष्टं चैतदुपपादितमैतरेयभाष्ये बृहतीसहस्रऋक्प्रतिपाद्यभगवद्रूपकथनप्रस्तावे। रमया रममाणोऽपि तस्य नैव स्त्रियात्मना। रमते नान्यतः क्वापि रतिर्विष्णोः सुखात्मनः। रमया रमणं तस्माद्रमया रतिपात्रता। नैवास्या रतिदातृत्वं विष्णोर्नह्यन्यतो रतिरित्यादि चेति। आत्मा चतुर्मुखो योनिर्यस्येति वा। तदुक्तं छान्दोग्यभाष्ये—भूमोपासनयोग्यस्तु साक्षाद् ब्रह्मैव मुख्यतः। स तद्विद्याबलेनैव विष्णुना रतिमाप्नुयात्। तेनैव क्रीडते नित्यं स्त्रीरूपो मिथुनी भवदिति॥ स्वयमेव स्वस्माज्जातत्वात्स्वयंजातः। उक्तं चैतदनुव्याख्याने आनन्दमयनये। भूतभूताभिमानी च तद्देहोऽन्तर्नियामकः। हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव चेत्यादिना। उपपादितं चैतत्कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेरित्यधिकरणे॥ खानि चानाश्च खानम् इन्द्रियप्राणाः विशिष्टाः खाना येषां ते विखाना मुक्तास्तेषामयं स्वामी वैखानः। विखानाः खननरहिता मुक्तास्तत्सम्बन्धी वैखानः। विशेषेण खानो विखानो विदारणं तस्यायं कर्ता वराहरूपेणेति वा॥ साम गायतीति वा सामगानामयनत्वाद्वा सामगायनः॥ देवक्या नन्दनो देवकीनन्दनः। देवानां कं यस्मादिति देवको वरुणस्तस्य स्त्री देवकी भागीरथी। पुंयोगादाख्यायामिति ङीष्। सा नन्दना यस्य स इति वा। पुंयोगादाख्यायामित्यत्र नन्दापत्यलक्षण एव पुंयोगः।

किन्तु जन्यत्वात् ङीषिति हरदत्ताद्युक्तेः । प्राक्केकयीतो भरतस्ततोऽभूदिति भट्टिप्रयोगात् । रेवतीरमणकोशाच्च । उक्तव्युत्पत्त्या देवको नारायणस्तस्यापत्यं स्त्री देवकी गङ्गा तां नन्दयतीति वा । भागवतटीकायां तु देवकी लक्ष्मीस्तां नन्दयतीत्युक्तम् ॥ स्रष्टृत्वात्स्रष्टा ॥ क्षितीशो भूपतिः ॥९९०॥ पापं नाशयतीति पापनाशनः । पापं नयतीति पापनास्तत्त्वाभिमानिनो दैत्यास्तानश्नाति संहरतीति वा ॥ १०६ ॥

**शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।**
**रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः**
**सर्वप्रहरणायुधः ॥**

**॥ ओं नमः इति ॥**

इति श्रीमन्महाभारते आनुशासनिके पर्वणि श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रं नाम त्रिनवतिशततमोऽध्यायः ॥

भा०—॥ शङ्खभृदिति । शङ्खं पाञ्चजन्यं, शङ्खप्रसूनाख्यनिधिं दधान इत्युक्तेः शङ्खनामकनिधिं वा बिभर्तीति शङ्खभृत् ॥ नन्दकी तन्नामकखड्गवान् ॥ चक्री रामकृष्णादिरूपेण सैन्यवान् जगन्वान् सुदर्शनवान्वा । शार्ङ्गधन्वा शार्ङ्गनाम धनुर्यस्यासौ तथा । धरतीति धरो गदाया धरो गदाधरः । रथाङ्गपाणिः रथाङ्गं चक्रं पाणौ यस्य ॥ क्षोभयितुमशक्यत्वा-

दक्षोभ्यः ॥ सर्वप्रहरणायुधः सर्वेषां शत्रूणां प्रहरणार्थमायुधानि यस्य स तथा। सर्वाध्यायार्थावधारणाद्यर्थोऽध्यायान्ते द्विरुक्तिः। अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा। विकारो यत्र सज्जेत पूर्वोक्तस्यावधारणे। अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेत्। विनिन्द्य चेतरान्मार्गान्सम्पूर्णफलता तथेति गारुडोक्तेः। यद्यपि गणनायां सहस्रतोऽपि कतिचिन्ना-मान्यधिकानि भवन्ति। तथाऽप्यनुज्ञेति सूत्रे शतधाहं सहस्रधा-ऽहमिति श्रुतिव्याख्यावसरे शतनामाष्टशतवाच्यत्वेन शतचिन-मितिवत्सामीप्यादविरोध इति तत्त्वप्रदीपोक्तेस्तन्न्यायेनाविरोध इति सम्प्रदायविदः। केचित्तु पदच्छेदभेदेन सहस्रनामत्वमपि योजनीयमित्याहुः ॥ ९९९ ॥ ओं अवति जगद्रक्षणादिकं करोति गुणान्प्रविशतीति वा गुणैरीयते जगता प्रविश्यते प्रलयादाविति वा। ओतं जगत्त्रयं स्वयं च पूर्णो वेदोक्त-रूपोऽनुपचारतश्च। सर्वैः शुभैश्चाभियुतो न चान्यैरोतत्सदि-त्येनमतो वदन्ति। ओमिति ब्रह्म। ओंनामा भगवान्विष्णु-रधिकोच्चगुणत्वतः। ओतमस्मिञ्जगत्सर्वमत्युच्चाखिलैर्गुणैः। अका-रस्य विकारोऽयमोङ्कार इति कथ्यते। अधिकोच्चत्वमानं हि तस्यार्थः समुदीरितः। अकारेणैव तत्सर्वमुक्तमाधिक्यतस्त्वतः। अधिकोच्चस्वरूपोऽसौ मतश्चाधिक एव हीत्युक्त्वा तस्मादकार-बीजेयं विष्णोर्नारायणाभिधा। प्रणवश्च यतोङ्कारः प्रधानं नाम चक्रिण इति श्रुतिस्मृतिभ्यः। चादिपाठादव्ययत्वम्। ओं गुण-

पूर्णाय नमः ॥ १००० ॥ १०७ ॥ मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, आयुष्मत्पुरुषाणि च, अध्येतारश्च प्रथन्त इत्युक्तेः ।

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

इत्युक्तेश्च ओं नम इत्यन्ते मङ्गलार्थम् ॥

श्रीमद्विष्णुसहस्रनामविवृतिः श्रीसत्यबोधाभिध-
स्वामिस्वान्तनिशान्तवर्त्यवनिजाकान्तस्य सन्तुष्टये ।
भक्त्याऽकारि च सत्यसन्धयतिना तुष्टोऽनया सेवया
देयाज्ज्ञानमतो भवामयभयात्पायाद्दयातोयधिः ॥ १ ॥

सत्यसन्धमुखाम्भोजनिःसृतस्तत्त्वगर्भितः ।
विष्णोः सहस्रनामाख्यसुधामोदोऽभिवर्धते ॥ २ ॥

इति श्रीमत्सत्यबोध श्रीपादानां करकमलसञ्जात श्रीसत्यसन्धाभिध-
सर्वतन्त्रस्वतन्त्रपदवाक्यप्रमाणपारावारपारीणयतिवर्यकृतं
श्रीमद्विष्णुसहस्रनामभाष्यं समाप्तम् ॥

समाप्तोऽयं ग्रन्थः ॥ श्रीकृष्णार्पणमस्तु

---

## ॥ फलस्तुतिः ॥

भीष्म उवाच--

इतीदं कीर्तनं यस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १ ॥

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः ॥ २ ॥

वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रस्सुखमवाप्नुयात् ॥ ३ ॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाम् ॥ ४ ॥

भक्तिमान्यस्सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ ५ ॥

यशः प्राप्नोति विपुलं याति प्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयश्चाप्नोत्यनुत्तमम् ॥ ६ ॥

न भयं क्वचिदाप्नोति वीर्यन्तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः ॥ ७ ॥

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ ८ ॥

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ ९ ॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १० ॥

न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥ ११ ॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्ति श्रीधृतिस्मृतिकीर्तिभिः ॥ १२ ॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३ ॥

द्यौस्सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १४ ॥

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १५ ॥

इन्द्रियाणि मनो बुद्धिस्सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १६ ॥

सर्वागमानामाचारः प्रथमं परिकल्पते ।
आचारः प्रथमो धर्मो धर्मस्य प्रभुरच्युतः ॥ १७ ॥

ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमश्चेदं जगन्नारायणोद्भवम् ॥ १८ ॥

योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादिकर्म च ।
वेदाश्शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ।। १९ ।।

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रीन्लोकान्व्याप्य भूतात्मा भुंक्ते विश्वभुगव्ययः ।। २०

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ।। २१ ।।

विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ।। २२ ।।

अर्जुन उवाच —

पद्मपत्रविशालाक्ष पद्मनाभ सुरोत्तम ।
भक्तानामनुरक्तानां त्राता भव जनार्दन ।। २३ ।।

श्रीभगवानुवाच —

यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव ।
सोहमेकेन श्लोकेन स्तुत एव न संशयः ।। २४ ।।

नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः

इति श्रीमन्महाभारते आनुशासनिके पर्वणि फलस्तुतिर्नाम
चतुर्नवतिशततमोऽध्यायः ।।

---